तथा त्रिरूपलिङ्गका कहना परार्थानुमान है।

यद्यपि इन लक्षणोंसे स्वार्थानुमानका ज्ञानरूप तथा परार्थानुमान का वचन रूप होना स्पष्ट है तथापि इन दोनोंका एक लक्षण हो सकता था। क्योंकि यद्यपि ये दोनों ज्ञान तथा वचन रूप हैं तथापि दोनों ही त्रिरूपलिङ्गसे उत्पन्न होते हैं। अतएव आचार्य धर्मकीर्ति अथवा धर्मोत्तर अनुमानका लक्षण 'त्रिरूपलिङ्गत्वमनुमानम्' कर सकते थे। जैसा कि प्राचीन न्यायके नये ग्रन्थ सिद्धान्तमुक्तावली, तर्कभाषा तथा तर्कसंग्रहकारने भी किया है। इन सबने ही ज्ञानात्मक स्वार्थानुमान तथा वचनात्मक परार्थानुमान माना है। तथापि 'लिङ्गपरामर्श' दोनोंमें समान होनेसे इन्होंने 'लिङ्गपरामर्शोऽनुमानम्' अनुमानका लक्षण कहा है।

जैनियोंका अनुमानका लक्षण इन सबसे अधिक परिष्कृत है। वह यह है—

'साधनात्साध्यविज्ञानमनुमानम्' ( परीक्षामुखसूत्र उद्देश ३ सूत्र १ ) अर्थात् साधन या हेतुसे साध्यका ज्ञान होना अनुमान है। इसमें यह बात ध्यान रखने योग्य है कि जैनी ज्ञानको ही अनुमान मानते हैं। परार्थानुमान भी उनके यहाँ ज्ञान रूप ही है। अन्तर दोनों अनुमानोंमें केवल इतना ही है कि स्वार्थानुमान विना किसीके उपदेशके अनुमाता ( अनुमान करने वाला ) स्वयं करता है। किन्तु परार्थानुमानका ज्ञान अनुमाताको दूसरेके वचनसे होता है। आचार्य धर्मकीर्तिका भी परार्थानुमानसे सम्भवतः यही आशय था किन्तु उस समय योग्य शब्द स्मरण न आनेसे वह सीधे आचार्य दिङ्नागके पीछे ही चले गये। क्योंकि परार्थानुमानके लक्षणकी पुष्टिमें उन्होंने हेतु यह दिया है 'कारणे कार्योपचारात्' ( न्या० पृ० ६१ )। अर्थात् यहाँ कारण 'वचन' में कार्य 'ज्ञान' का उपचार कर लेनेसे वचन ही परार्थानुमान माना गया है।

ऐसा विदित होता है कि अनुमानके स्वार्थ और परार्थभेद बौद्ध नैयायिकोंके आविष्कार थे। क्योंकि न तो उनका सिद्धसेन दिवाकर ( लगभग ४८०–५५० ई० ) से पहिलेके जैन न्यायके ग्रन्थोंमें ही उल्लेख है और न न्याय दर्शनमें ही है। इसके विरुद्ध न्याय दर्शनमें उसके और ही पूर्ववत्, शेषवत् और सामान्यतोदृष्ट नामके तीन २ भेद उपलब्ध होते हैं।

ऊपर न्यायबिन्दुकथित स्वार्थानुमानका लक्षण कहा जा चुका है। यदि सूक्ष्म दृष्टिसे विचार किया जावे तो बौद्धोंका 'तत्र स्वार्थं त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमानम्' और जैनियों 'साधनात्साध्यविज्ञानमनुमानम्' एक ही बात है। क्योंकि अनुमेय साध्य होता ही है ( न्या० पृ० २४ पं० १२ ) और त्रिरूपलिङ्ग भी हेतुके अतिरिक्त और कुछ नहीं है। जैसा कि न्यायबिन्दुके बहुतसे स्थलोंसे प्रगट होता है। इसीलिये स्वार्थानुमानके लक्षणके पश्चात् न्यायबिन्दुमें पक्षधर्मत्व, सपक्षसत्त्व और विपक्षाद्व्यावृत्ति नामक त्रिरूपलिङ्गका वर्णन किया गया है। यदि विस्तारसे कहना हो तब तो मध्यकालीन नैयायिकोंके समान इनमें अबाधितविषयत्व और असत्प्रतिपक्षत्व और बढ़ाये जा सकते हैं किन्तु बौद्धोंने तीन ही रूप रखकर हेतुका कथन किया है। इस

अवसर पर हमको फिर जैनियोंका हेतुका लक्षण स्मरण हो आता है जो इनसे अधिक परिष्कृत, संक्षिप्त तथा युक्तिपूर्ण है। वह यह है—

'साध्याविनाभावित्वेन निश्चितो हेतुः'। ( परीक्षामुख उद्देश ३ सूत्र १५। )

अर्थात् जिसका साध्य ( अनुमेय ) के साथ अविनाभावी सम्बन्ध निश्चित हो वह हेतु होता है।

वास्तवमें विचार किया जावे तो त्रिरूपलिङ्ग अविनाभावनियम अथवा व्याप्तिके अतिरिक्त और कुछ नहीं है।

इस प्रकार न्यायबिन्दुकारने हेतुके लक्षणका वर्णन करके फिर उसके भेदोंका वर्णन किया है। किन्तु उन बेचारोंको अपना अभिप्राय प्रगट करने योग्य पर्याप्त शब्द यहाँ भी नहीं मिले हैं। क्योंकि कभी वह पक्षधर्मत्व आदिको त्रिरूपलिङ्ग कहते हैं तथा कभी वह हेतुके भेद अनुपलब्धि, स्वभावलिङ्ग और कार्यलिङ्गको त्रिरूपलिङ्ग कहते हैं। इसी मुसीबतमें पड़ जानेसे उन्होंने त्रिरूपलिङ्गको एक स्थानपर 'त्रैरूप्य' ( न्या० पृ० २२ पं० ९ ) तथा दूसरे स्थान पर भेदोंको 'त्रिरूपलिङ्ग' कहा है ( न्या० पृ० २५ पं० १४ )

अब थोड़ा विचार बौद्धोंके इन तीनों हेतुओं पर भी कर लें। प्राचीन नैयायिकोंने तो हेतुके भेद करनेपर विशेष ध्यान ही नहीं दिया है। हाँ, जैन नैयायिकोंमें हेतुके भेद बौद्धोंसे भी अधिक किये हैं। किन्तु विषयान्तर हो जानेसे हम यहाँ केवल बौद्धोंके ही हेतुके भेदोंपर विचार करेंगे।

यह पीछे दिखलाया जा चुका है कि बौद्धोंने हेतुके तीन भेद माने हैं—

**स्वभाव, कार्य और अनुपलब्धि।**

जो पदार्थ उपलब्ध हैं वह अनुपलब्ध नहीं हो सकते अतएव उपलब्ध होना पदार्थका स्वभाव है। स्वभाव लिङ्गमें पदार्थों की यह उपलब्धि ही हेतु रूपमें उपस्थित की जाती है। जैसे—'यह वृक्ष है, क्योंकि यह शीशम है'

कार्यलिङ्ग अनुमेय ( साध्य ) के कार्यको देखकर उसकी उपलब्धिका अनुमान करता है। जैसे किसीने धुआँ देखकर कहा कि-'यहाँ अग्नि है क्योंकि यहाँ धुआँ है।'

पदार्थका न मिलना अनुपलब्धि है। बौद्धोंने इसको भी हेतु माना है। जैसे—देवदत्तको उसके घरमें अनुपस्थित देखकर कोई कहे—'देवदत्त घरमें नहीं है। क्योंकि वह वहाँ अनुपलब्ध है।'

इन तीनों हेतुओंमेंसे स्वभाव और कार्य वस्तु की उपस्थिति और अनुपलब्धि अनुपस्थितिको साधन करते हैं।

इसके पश्चात् कुछ इन हेतुओंका ही वर्णन करके अनुपलब्धिके भेद बतलाकर द्वितीय परिच्छेद समाप्त किया गया है। अनुपलब्धिके भेदोंको हम विस्तारके भयसे यहाँ नहीं लिख रहे हैं।

## तृतीय परिच्छेद।

इस परिच्छेदमें परार्थानुमानका वर्णन है। आरम्भमें उसकी परिभाषा दी हुई है, जिसका पीछे वर्णन कर आये हैं। इसके पश्चात् उसके साधर्म्यवत् और वैधर्म्यवत् दो भेद बतलाकर स्वयं ही कह दिया है कि इनमें अर्थसे कोई भेद नहीं है केवल प्रयोगका भेद है (न्या० पृ० ४७ पं० १७)। अतएव इन दोनोंके विषयमें हम यहाँ कुछ नहीं लिखेंगे।

इन दोनों ही प्रयोगोंमें पक्षका अवश्य ही निर्देश किया जाना चाहिये। अतएव परार्थानुमानके भेदोंके पश्चात् पक्षका वर्णन किया गया है। जो कि लगभग सभी न्यायोंमें एक ही प्रकारसे कहा गया है। यहाँ सामान्यरूपसे परार्थानुमानका वर्णन समाप्त हो गया है।

इसके पश्चात् हेत्वाभासोंका वर्णन है। यह पीछे बतलाया जा चुका है कि बौद्ध हेतुमें पक्षधर्मत्व आदि तीन बातोंका होना आवश्यक मानते हैं। अतएव उन तीनों रूपोंमेंसे एक भी रूपके न होने अथवा संदिग्ध होनेपर हेत्वाभास हो जाता है। अतएव त्रिरूपलिङ्ग माननेसे बौद्धोंको तीन ही हेत्वाभास भी मानने पड़े हैं। जो कि ये हैं—

### असिद्ध, विरुद्ध और अनैकान्तिक।

पीछे दिखलाया जा चुका है कि मध्यकालीन नैयायिक हेतुमें पाँच बातोंका होना आवश्यक मानते थे। अतएव उनके मतके अनुसार इन्हीं तीनमें बाधितविषय और सत्प्रतिपक्ष ये दो और जोड़ देनेसे पाँच हेत्वाभास होते हैं।

न्याय दर्शनमें सव्यभिचार, विरुद्ध, प्रकरणसम, साध्यसम और कालातीत ये पाँच हेत्वाभास माने हैं, जो कि ऊपर वालोंसे अविरुद्ध ही हैं।

जैनियोंने असिद्ध, विरुद्ध, अनैकान्तिक और अकिञ्चित्कर ये चार हेत्वाभास माने हैं। जिनमें अकिञ्चित्कर हेत्वाभास नया हेत्वाभास है।

न्यायबिन्दुमें इनके भेद प्रभेद भी बहुतसे दिखलाये हैं जो अन्य नैयायिकोंसे विशेष भिन्न नहीं है।

हेत्वाभासोंके पश्चात् दृष्टान्त और दृष्टान्ताभासोंका वर्णन है।

## (८) न्यायबिन्दुमें अन्य दर्शनोंके सिद्धान्त।

हम पीछे बतला आये हैं कि आरम्भिक बौद्धन्यायपर गौतमीय न्यायकी पूरी छाप लगी हुई है। न्यायबिन्दुको देखनेसे पता चलता है कि वह छाप इतनी पक्की हो गई थी कि धर्मकीर्ति भी उसकी उपेक्षा न कर सके। और इसी कारणसे उन्होंने ग्रन्थ समाप्त करते २ विशेष आवश्यक न होनेपर भी दूषणा, जाति और जात्युत्तरका थोड़ा सा वर्णन कर ही डाला। इनमें से जाति न्यायदर्शनका एक मुख्य विषय है। न्यायबिन्दुकी समालोचनाको समाप्त करते हुए इतना लिख देना और आवश्यक प्रतीत होता है कि न्यायबिन्दु पद्य तो है ही नहीं, किन्तु यह सूत्र या वार्तिक भी नहीं है। सूत्र किसी अपेक्षासे इसको कह भी सकते हैं। किन्तु लेखके बीचमें संख्या इत्यादिका

बिलकुल अभाव होनेसे इसको सूत्र समझना भी कठिन है। हमारी सम्मतिमें यह बौद्ध न्यायके ऊपर एक स्वतन्त्र निबन्ध है जो कि विचारकर ऐसे ढंगसे लिखा गया है कि उसका प्रत्येक वाक्य सूत्र सा प्रतीत होता है।

न्यायबिन्दु टीकामें पृष्ठ ५२ पं० २३ में 'तस्यैवेति' पाठ है किन्तु उसका मूल उपलब्ध नहीं है। यद्यपि 'तस्यैव' को अगले वाक्यमें मिला देनेसे वह वाक्य ( तस्यैव तत्स्वभावत्वात्स्वभावस्य च हेतुत्वात् ) पूरा हो जाता है तथापि चित्तमें यह खटका बना ही रहता है कि न जाने और कहां २ पाठ छूट गया हो।

न्यायबिन्दुसे प्रगट होता है कि आचार्य धर्मकीर्ति और धर्मोत्तर दोनों अन्य भारतीय दर्शनोंके भी धुरन्धर विद्वान् थे। क्योंकि दृष्टान्ताभासके वर्णन तथा अन्य ऐसे ही स्थलों पर उन्होंने थोड़े २ शब्दोंमें अन्य दर्शनोंके सिद्धान्तोंका अच्छा वर्णन किया है।

आचार्य धर्मकीर्तिने न्यायबिन्दु पृ० ९८ पं० १५ तथा पृ० १०० पं० ७ में जैनियोंके तीर्थंकर ऋषभका उल्लेख दोनों स्थल पर तथा वर्धमानका उल्लेख प्रथम स्थलपर किया है। इससे प्रगट होता है कि उनके समय आठवीं शताब्दीमें भी जैनेतर विद्वान् जैनधर्मका प्रथम उपदेश देनेवाला भगवान् ऋषभदेवको ही समझते थे न कि भगवान् वर्धमानको। जैनधर्मका प्रथम उपदेष्टा भगवान् महावीर या पार्श्वनाथको कहने की धारणा पाश्चात्य ऐतिहासिकोंके ही मस्तिष्ककी उपज विदित होती है।

## ( ६ ) न्यायबिन्दुकी टीकाएँ।

न्यायबिन्दु जैसा क्लिष्ट ग्रन्थ है वैसी ही प्रचुर संख्यामें इसकी टीकायें नहीं मिलतीं। यद्यपि टीकायें इसकी भी कम नहीं बनीं तथापि उनमेंसे अधिकांशका मूल संस्कृत लुप्त हो गया है, केवल उनका तिब्बी अनुवाद शेष है। न्यायबिन्दुकी निम्नलिखित टीकायें बनी हैं—

१—न्यायबिन्दुपिण्डार्थ—आचार्य जिनमित्र ( लगभग १०२५ ई० ) कृत। इसमें न्यायबिन्दुका सारांश है।

२—न्यायबिन्दुपूर्वपक्ष संक्षिप्त—आचार्य कमलशील ( लगभग ७५०ई० ) कृत इसमें न्यायबिन्दुकी समालोचनाओंका संक्षेप है।

३—धर्मोत्तरटिप्पणक-श्वेताम्बर जैन आचार्य मल्लवादिन् ( लगभग ८२७ ई० ) कृत। धर्मोत्तरकृत न्यायबिन्दु टीका की टीका। यह अनहिलवाड़ा पाटनमें ताड़पत्र पर लिखी हुई रखी है।

४—न्यायबिन्दुटीका—आचार्य विनीतदेव ( लगभग ७०० ई० ) कृत, यह न्यायबिन्दुके ऊपर विस्तृत टीका है।

५—न्यायबिन्दुटीका-आचार्य धर्मोत्तर ( लगभग ८४७ ई० ) कृत। यह पाठकोंके हाथोंमें विद्यमान है। यह भी न्यायबिन्दुके ऊपर विस्तृत टीका है।

## ( १० ) न्यायबिन्दुमें बौद्धदर्शनके सिद्धान्त।

यद्यपि न्यायबिन्दु विशुद्ध न्यायका ही ग्रन्थ है तथापि प्रसङ्गवश कहीं २ आचार्यने उसमें ऐसे वाक्य भी लिखे हैं जिनसे बौद्ध सिद्धान्तोंकी बहुत कुछ झलक मिलती है। हमने ऐसे वाक्योंको यथाशक्ति प्रयत्न करके न्यायबिन्दुमें से निकाला है और उनके अन्दरसे हमारी सम्मतिमें जो दार्शनिक सिद्धान्त निकाले जा सकते हैं उनको नीचे दिया है—

( १ ) जहाँ सांख्य सत्से सत् की उत्पत्ति मानता है वहाँ बौद्ध असत्की उत्पत्ति और सत्का निरन्वय विनाश मानता है। जैसा कि कहा है—

'परस्य चासत उत्पाद उत्पत्तिमत्त्वम्। सतश्च निरन्वयो विनाशोऽनित्यत्वं सिद्धम्'। ( न्या० पृ० ६९ पं० १४ )

( २ ) बौद्धोंने विज्ञान, इन्द्रिय और आयुके निरोधको ही मरण माना है। जैसा कि धर्मकीर्तिने कहा है—

'विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात्'। (न्या० पृ० ६८ पं० १०)

( ३ ) बौद्धदर्शन वृक्षोंमें विज्ञान आदिका सद्भाव नहीं मानता। अतएव मरने या जीनेका उनमें विकल्प ही नहीं है—

'तस्य च विज्ञानादिनिरोधात्मकस्य तरुष्वसंभवात्'। ( न्या० पृ० ६८ पं० १९ )

( ४ ) बौद्ध सुख आदिको अचेतन मानते हैं। जैसा कि धर्मकीर्ति के निम्नलिखित वाक्यसे प्रगट होता है—

'अचेतनाः सुखादय इति साध्य उत्पत्तिमत्त्वमनित्यत्वं वा सांख्यस्य स्वयं वादिनोऽसिद्धम्'। ( न्या० पृ० ६७ पं० ७ )

( ५ ) बौद्ध आत्माको नहीं मानता। जैसा कि टीकामें कहा गया है—

'तदिह बौद्धस्यात्मैव न सिद्धः'। ( पृ० ७१ पं० ५ ) तथा 'बौद्धेनोक्तं नास्त्यात्मा'। ( पृ० ६३ पं० १२ )

( ६ ) पीछे बतला दिया है कि बौद्ध दर्शन विज्ञान, इन्द्रिय और आयुके निरोधको मरण मानता है किन्तु आत्माको नहीं मानता। यहाँ यह शङ्का होती है कि जब आत्मा ही नहीं है तो मरण किसका होता है। उसका समाधान यह है कि बौद्ध वास्तवमें मरण नहीं मानता किन्तु निरोध ( रुकना ) मानता है। बौद्ध प्राण आदिको मानता है किन्तु अनात्मवादी होनेसे न तो उनको सात्मक ही मानता है और न निरात्मक ही मानता है। जब तक विज्ञान आदि शरीरमें रहते हैं तब तक शरीर जीता है जब नहीं रहते तो मर जाता है। इसलिये प्राण आदि जीवित शरीर सम्बन्धी हैं। जैसा कि धर्मकीर्तिने कहा है—

'सात्मकत्वेन निरात्मकत्वेन वा प्रसिद्धे प्राणोदरसिद्धिः'। ( पृ० ८३ पं० २ )। तथा 'तस्माज्जीवच्छरीरसम्बन्धी प्राणादिः'। ( पृ० ८३ पं० ७ )

( ७ ) कर्मको अन्य दर्शनकारोंके समान बौद्धने भी अनित्य ही माना है। जैसा कि टीकामें कहा है—

'साध्यविकलं कर्म तस्यानित्यत्वात्' ( पृ० ९५ पं० १ )

( ८ ) परमाणुको बौद्ध भी मूर्त मानता है। जैसा कि टीकामें कहा है—

'असर्वगतं द्रव्यपरिमाणं मूर्तिः। असर्वगताश्च द्रव्यरूपाश्च परमाणवः। ( पृ० ९५ पं० ३ )

( ९ ) घटको अनित्य भी माना है और मूर्त भी माना है। जैसा कि कहा है—

( घटस्तूभयविकलः। अनित्यत्वान्मूर्तत्वाच्च घटस्येति। ( पृ० ९५ पं० ४ )

( १० ) बौद्ध दर्शनमें जो पदार्थ विद्यमान हैं वे सब अनित्य हैं। जैसा कि धर्मकीर्तिने कहा है—

'यत्सत्तत्सर्वमनित्यं यथा घटादिरिति'। ( पृ० ४९ पं० १५ )

( ११ ) बौद्ध दर्शनमें साध्य और साधनको बिलकुल अभिन्न मानकर उनका तादात्म्य सम्बन्ध माना है। उनमें भेद समारोप जनित है। जैसा कि कहा है—

'साध्यसाधनयोस्तादात्म्यम्। समारोपितस्तु साध्यसाधनयोर्भेदः'। (पृ० ५३ पं० ११) हमने न्यायबिन्दुके उपरोक्त वाक्योंमें से स्थूल सिद्धान्तोंको ही निकाला है। सूक्ष्म सिद्धान्तोंको निकालनेका काम अपने लिये असाध्य समझकर विशेष विद्वानोंके लिये छोड़ दिया है।

## धन्यवाद।

इस भूमिकाको समाप्त करनेके पूर्व मुझे एक और कर्तव्यका पालन करना है। सबसे प्रथम मुझे डाक्टर सतीशचन्द्रजी विद्याभूषणको धन्यवाद देना है जिनकी पुस्तकसे मैं इस भूमिकामें ऐतिहासिक अंश देनेमें सफल हुआ हूँ। यद्यपि हमने इस विषयके अन्य भी कई ग्रन्थ देखे, किन्तु उनसे कुछ भी विशेष लाभ न हो सका। दूसरे मुझे हिन्दू विश्वविद्यालयके फिलासोफीके प्रोफेसर तथा सहायक रजिस्ट्रार पं० इन्द्रदेव जी तिवारी एम० ए० को देना है जिनसे मुझको समय २ पर योग्य सम्मत्ति तथा अनेक प्रकारकी सहायता मिली है। वास्तवमें आपकी सहायताके बिना मेरा काम अत्यन्त गुरुतर हो जाता। गवर्नमेन्ट संस्कृत कालेजके प्रिंसिपल तथा संस्कृत परीक्षाओंके रजिस्ट्रार पं० गोपीनाथजी कविराज एम० ए० की सहायता का तो मैं अत्यन्त आभारी हूँ, जिन्होंने अपने अमूल्य समयको नष्टकर मुझे विविध प्रकारकी सहायता दी है।

भदैनी, बनारस
दि० २८ जून १९२४ ई०।

चन्द्रशेखर शास्त्री।
काव्यसाहित्यतीर्थाचार्य।

# द्वितीय संस्करण की भूमिका

भारत में बौद्ध विषयक ग्रन्थों के सम्बन्ध में जनता की रुचि का पता इस तथ्य से भली प्रकार लगता है कि इस ग्रन्थ के द्वितीय संस्करण का उत्थान सन् १९२४ के पश्चात् आज ३० वर्ष की लम्बी अवधि के उपरान्त आया है। यद्यपि यह ग्रंथ कई विश्वविद्यालयों के एम० ए० तथा संस्कृत की अनेक स्नातकोत्तर परीक्षाओं का पाठ्य ग्रन्थ है, किन्तु संभवतः विद्यार्थियों के अतिरिक्त अन्य विद्वानों ने इसमें अधिक रुचि प्रकट नहीं की। इसको देश के दुर्भाग्य के अतिरिक्त और कुछ नहीं समझा जा सकता।

न्यायबिन्दु के १९२४ में प्रकाशित होने के उपरान्त विद्वानों ने बौद्धन्याय के सम्बन्ध में पर्याप्त खोज की भारत के कुछ विद्वानों ने तिब्बत के प्राचीन ग्रन्थ भण्डारों में जाकर तिब्बती में लिखे हुए संस्कृत ग्रन्थों के अन्वेषण में अपना सारा जीवन लगा दिया। इस खोज के फलस्वरूप आचार्य धर्मकीर्ति के कुछ अन्य न्याय ग्रन्थों का अपने मूल संस्कृतरूप में पता लग गया। धर्मकीर्ति के अतिरिक्त अन्य भी अनेक बौद्ध आचार्यों के ग्रन्थों का अपने मूल संस्कृतरूप में पता लग चुका है।

प्राचीन भारतीय वाङ्मय की इस महत्त्वपूर्ण खोज के फलस्वरूप पटना की विहार रिसर्च सोसाइटी ने बौद्धन्याय के निम्नलिखित सस्कृत ग्रन्थों को प्रकाशित किया है—

१. प्रमाणवार्तिक—यह आचार्य धर्मकीर्ति की रचना अपने मूल संस्कृत रूप में छपी है।

२. वादन्याय अथवा तर्कन्याय—भी धर्मकीर्ति का ग्रन्थ है।

३. प्रमाणवार्तिकवृत्ति—इसकी रचना मनोरथनन्दी ने की है।

४. प्रमाणवार्तिकभाष्य—इसकी रचना प्रज्ञाकर गुप्त ने की है विहार रिसर्च सोसाइटी के जर्नल में।

५. धर्मकीर्ति का प्रमाणवार्तिक स्ववृत्ति टीका भी प्रकाशित हुई है। इसकी रचना कर्णकगोमी ने की है। बाद में इसको प्रयाग के किताबमहल ने प्रकाशित किया।

पटना से रत्नकीर्ति के अन्य भी अनेक न्यायनिबन्धों के प्रकाशित होने की आशा है। वहां ज्ञानश्रीमित्र के न्यायग्रन्थों का संपादन तथा प्रकाशन करने का भी आयोजन किया जा रहा है।

इसके अतिरिक्त गायकवाड़ ओरिएंटल सीरीज़ में हेतुबिन्द टीका अपनी अनुटीका सहित छपी है।

इन ग्रन्थों को प्रकाश में लाने का बहुत कुछ श्रेय महापण्डित राहुल सांकृत्यायन को है।

इस प्रकार यद्यपि विशेष विद्वान् बौद्धन्याय के सम्बन्ध में अधिकाधिक खोज करते जाते हैं, किन्तु जनता की उनमें पर्याप्त रुचि नहीं होती। स्वाधीन भारत के नागरिकों को गंभीर अध्ययन के क्षेत्र में अपने दृष्टिकोण को अत्यधिक उदार बनाना चाहिये।

४५६६ बाजार पहाड़गंज
नई दिल्ली-१
दिनांक १९ अगस्त १९५४ ई०

चन्द्रशेखर शास्त्री

# न्यायबिन्दु-विषयानुक्रमणिका

प्रथमः परिच्छेदः ।


| विषयः | | पृष्ठं | पंक्तिः |
|---|---|---|---|
| मङ्गलाचरणम् | ... | १ | ४ |
| ग्रन्थस्याभिधेयप्रयोजनम् | ... | ,, | ६ |
| अभिधेयादीनामावश्यकताप्रदर्शनम् | ... | ३ | ११ |
| सम्यग्ज्ञानस्य लक्षणम् | ... | ४ | ६ |
| प्रमाणसामान्यवर्णनम् | ... | ,, | १३ |
| सम्यग्ज्ञानस्य द्वैविध्यम् | ... | ७ | ११ |
| प्रत्यक्षलक्षणम् | ... | ८ | १६ |
| कल्पनाया लक्षणम् | ... | १० | ६ |
| प्रत्यक्षस्य चातुर्विध्यम् | ... | १२ | २० |
| इन्द्रियज्ञानम् | ... | ,, | २१ |
| मनोविज्ञानम् | ... | १३ | ३ |
| स्वसंवेदनप्रत्यक्षम् | ... | १४ | ५ |
| योगिप्रत्यक्षम् | ... | ,, | २० |
| प्रत्यक्षस्य विषयः | ... | १५ | ,, |
| स्वलक्षणम् | ... | १६ | १० |
| परमार्थसत् | ... | १७ | ३ |
| सामान्यलक्षणम् | ... | ,, | १८ |
| अनुमानस्य विषयः | ... | १८ | ४ |
| प्रमाणफलम् | ... | ,, | १० |
| प्रमाणम् | ... | ,, | २२ |

## द्वितीयः परिच्छेदः ।


| विषयः | | पृष्ठं | पंक्तिः |
|---|---|---|---|
| अनुमानस्य द्वैविध्यम् | ... | २१ | २ |
| स्वार्थानुमानम् | ... | „ | १५ |
| अनुमानस्य फलम् | ... | „ | २३ |
| त्रैरूप्यम् | ... | २२ | ६ |
| पक्षधर्मत्वम् | ... | „ | १२ |
| सपक्षसत्वम् | ... | २३ | ३ |
| विपक्षाद्व्यावृत्तिः | ... | „ | १२ |
| अनुमेयः | ... | २४ | „ |
| सपक्षः | ... | „ | १७ |
| असपक्षः | ... | २५ | ५ |
| त्रिरूपलिङ्गानि | ... | „ | १४ |
| अनुपलब्धिः | ... | „ | २१ |
| उपलब्धिलक्षणप्राप्तिः | ... | २६ | २ |
| स्वभावविशेषः | ... | २७ | „ |
| कार्यस्योदाहरणम् | ... | २८ | १६ |
| त्रिरूपलिङ्गानामेव हेतुत्वम् | ... | २६ | १६ |
| स्वभावकार्ययोरेव तादात्म्यतदुत्पत्ती | ... | ३१ | २१ |
| दृश्यानुपलब्धिः | ... | ३३ | १ |
| अनुपलब्धेः प्रकारभेदप्रदर्शनम् | ... | ३५ | ११ |
| स्वभावानुपलब्धिः | ... | „ | १६ |
| कार्यानुपलब्धिः | ... | ३६ | १ |
| व्यापकानुपलब्धिः | ... | „ | २३ |
| स्वभावविरुद्धोपलब्धिः | ... | ३७ | १० |
| विरुद्धकार्योपलब्धिः | ... | „ | १६ |
| विरुद्धव्याप्तोपलब्धिः | ... | ३८ | १ |
| कार्यविरुद्धोपलब्धिः | ... | ३६ | ३ |
| व्यापकविरुद्धोपलब्धिः | ... | „ | १२ |

| विषयः | | पृष्ठं | पंक्तिः |
|---|---|---|---|
| कारणानुपलब्धिः | ... | ३६ | २१ |
| कारणविरुद्धोपलब्धिः | ... | ४० | ७ |
| कारणविरुद्धकार्योपलब्धिः | ... | ,, | २१ |
| तासां स्वभावानुपलब्धावन्तर्भावः | ... | ४१ | १३ |
| विप्रकृष्टविषयानुपलब्धिः | ... | ४४ | २१ |


## तृतीयः परिच्छेदः ।


| | | | |
|---|---|---|---|
| परार्थानुमानस्य लक्षणम् | ... | ४६ | २ |
| तस्य द्वैविध्यम् | ... | ४७ | ,, |
| साधर्म्यवत् | ... | ,, | ८ |
| स्वभावहेतोः प्रयोगः | ... | ४६ | १४ |
| शुद्धस्य स्वभावहेतोः प्रयोगः | ... | ,, | २२ |
| स्वभावभूतधर्मभेदेन स्वभावस्य प्रयोगः | ... | ५० | ६ |
| कृतकत्वम् | ... | ५१ | १ |
| प्रत्ययभेदभेदित्वादयः | ... | ,, | १२ |
| साध्यधर्मः साधनस्य स्वभावः | ... | ५२ | १ |
| तस्मिन्नेव विषये हेतुः | ... | ५३ | ,, |
| तस्य प्रतिज्ञार्थैकदेशहेतुत्वस्य परिहारः | ... | ,, | ६ |
| कार्यहेतोः प्रयोगः | ... | ५४ | ,, |
| वैधर्म्यवतः प्रयोगः | ... | ,, | २२ |
| स्वभावहेतोर्वैधर्म्यप्रयोगः | ... | ५५ | १३ |
| कार्यहेतोर्वैधर्म्यप्रयोगः | ... | ,, | २२ |
| साधर्म्येणापि प्रयोगेऽर्थाद्वैधर्म्यगतिः | ... | ५६ | ५ |
| वैधर्म्येणाप्यन्वयगतिः | ... | ,, | १६ |
| स्वभावप्रतिबन्धस्य द्वैविध्यम् | ... | ५७ | ३ |
| पक्षस्य लक्षणम् | ... | ६० | १० |
| प्रत्यक्षनिराकृतः | ... | ६३ | २२ |
| अनुमाननिराकृतः | ... | ६४ | ६ |

| विषयः | | पृष्ठं | पंक्तिः |
|---|---|---|---|
| प्रतीतिनिराकृतः | ... | ६५ | ११ |
| स्ववचननिराकृतः | ... | ,, | २४ |
| हेत्वाभासः | ... | ६७ | १४ |
| असिद्धहेत्वाभासः | ... | ,, | १५ |
| संदिग्धासिद्धः | ... | ६९ | २१ |
| स्वात्मना संदिह्यमानः | ... | ७० | २ |
| आश्रयणसिद्धः | ... | ,, | ११ |
| धर्मिणः सिद्धावप्यसिद्धः | ... | ,, | २३ |
| अनैकान्तिको हेत्वाभासः | ... | ७१ | १० |
| अविकलकारणस्य भवतोऽन्यभावो नाम प्रथमो विरोधः | | ७४ | ४ |
| परस्परपरिहारस्थितलक्षणता नाम द्वितीयो विरुद्धः | | ७५ | २१ |
| विरुद्धहेत्वाभासः | ... | ७८ | १० |
| दिङ्नागेनाभ्युपगत इष्टविघातकृद्विरुद्धः | ... | ७९ | ९ |
| धर्मकीर्तिना तस्य निराकरणम् | ... | ८० | ६ |
| संदिग्धोऽन्वयः | ... | ८१ | ४ |
| दिङ्नागेनाभ्युपगतो विरुद्धाव्यभिचारी हेतुः | ... | ८६ | ३ |
| तस्य धर्मकीर्तिना निराकरणम् | ... | ,, | १० |
| विरुद्धाव्यभिचारिण्युदाहरणम् | ... | ८८ | ८ |
| अस्य स्वभावहेतुत्वम् | ... | ,, | २२ |
| दिङ्नागेनाभ्युपगतस्य दृष्टान्तस्य साधनावयवत्वस्य निराकरणम् | ... | ९१ | १ |
| दृष्टान्ताभासाः | ... | ९४ | १७ |
| दूषणा | ... | १०३ | ४ |
| जातयः | ... | ,, | १८ |
| जात्युत्तराणि | ... | ,, | २३ |
| टीकाकारकृतमन्तिममङ्गलम् | ... | १०४ | ४ |
| ग्रन्थसमाप्तिः | ... | ,, | ७ |



नमः सर्वज्ञाय

# न्यायबिन्दुः

## प्रथमपरिच्छेदः

जयन्ति(१) जातिव्यसनप्रबन्धप्रसूतिहेतोर्जगतो विजेतुः ।
रागाद्यरातेः सुगतस्य वाचो मनस्तमस्तानवमादधानाः ॥

सम्यग्ज्ञानपूर्विकेत्यादिनास्य प्रकरणस्याभिधेयप्रयोजनमुच्यते—

**सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति तद् व्युत्पाद्यते ।**

---

(१) तत्र विदुषामग्रणीः श्रीधर्मोत्तराचार्यः न्यायबिन्दुं व्याचिख्यासुः प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारपरिपालनार्थं वा स्वमतं स्थापयन् भगवतो बुद्धस्य गुणसंस्तवनं करोति । **'जयन्ति'** इत्यादिना । सुगतस्य भगवतो बुद्धस्य वाचः वाण्यः जयन्ति । कथम्भूतस्य बुद्धस्येत्यत आह—जातीनाम् प्राणिसामान्यानां । 'जातिर्जातञ्च सामान्यम्' **इत्यमरः ।** व्यसनस्य विपदः 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' **इत्यमरः ।** प्रबन्धस्य सन्दर्भस्य परम्परायाः इत्यर्थः । या प्रसूतिः श्च्योतः क्षरणं नाश इत्यर्थः । 'प्रसूतिः प्रसवे श्च्युते' **इत्यमरः ।** तस्या हेतुः कारणभूतस्तस्य । एतेन संसारस्य दुःखमयत्वं बुद्धस्य तद्विनाशे कारणत्वञ्च प्रदर्शितम् । जगतः संसारस्य विजेतुः जयकर्त्तुस्तस्मिन्ननासक्तस्येत्यर्थः । एतेन बुद्धस्य सर्वसंसारसम्बन्धिविकारेषु जयित्वं जगतस्तरणत्वञ्च सूचितम् । रागादीनाम् रागद्वेषलोभमोहादिसंसारसम्बन्धिभावानामरातिश्शत्रुस्तस्य । एतेन तस्य वीतरागित्वं द्योतितम् । एतादृशः सुगतस्य बुद्धस्य वाचः जयन्ति । कथम्भूता वाचः इत्यत आह—**मनः** इत्यादि । मनसो यत्तमस्तस्य तानां तनोः भावस्तं कार्श्यमादधानाः सम्पादयन्त्यः । एतेन बुद्धस्य वाचि ज्ञानप्रदत्वं प्रकटीकृतम् ।

सौगताः 'बुद्धः परमेश्वरस्यावतार' इति नाभिमन्यन्ते । किन्तु तेषां मते सर्वसंसारि-

---

१ 'सम्यग्ज्ञानपूर्विका सर्वेत्यादिना' इति पाठान्तरम् 'क' पुस्तके ।

द्विविधं हि प्रकरणशरीरं शब्दोऽर्थश्चेति[1]। तत्र शब्दस्य स्वा[2]भिधेयप्रतिपादनमेव प्रयोजनम्। नान्यत्। अतस्तन्न[3] निरूप्यते। अभिधेयं[4] तु यदि निष्प्रयोजनं स्यात्तदा तत्प्रतिपत्तये[5] शब्दसन्दर्भोऽपि नारम्भणीयः स्यात्। यथा काकदन्तप्रयोजनाभावात्[6] तत्परीक्षारम्भणीया प्रेक्षावता। तस्मादस्य प्रकरणस्यारम्भणीयत्वं दर्शयताभिधेयप्रयोजनमनेनोच्यते। यस्मात्सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिस्तस्मात्तत्प्रतिपत्त्यर्थमिदमारभ्यत इत्ययमत्र वाक्यार्थः।

अत्र च प्रकरणाभिधेयस्य सम्यग्ज्ञानस्य सर्वपुरुषार्थसिद्धिहेतुत्वं प्रयोजनमुक्तम्। अस्मिंश्चार्थे उच्यमाने सम्बन्धप्रयोजनाभिधेयान्युक्तानि भवन्ति। तथा हि—पुरुषार्थोपयोगि सम्यग्ज्ञानं व्युत्पादयितव्यमनेन प्रकरणेनेति ब्रुवता सम्यग्ज्ञानमस्य शब्दसन्दर्भस्याभिधेयं, तद्व्युत्पादनं प्रयोजनं, प्रकरणं चेदमुपायो व्युत्पादनस्ये[7]त्युक्तं भवति। तस्मादभिधेयभागप्रयोजनाभिधानसामर्थ्यात्सम्बन्धादीन्युक्तानि भवन्ति। न त्विदमेकं वाक्यं[8] सम्बन्धमभिधेयं प्रयोजनं च वक्तुं समर्थम्[9]। एकं तु वदत् त्रयं

---

जीवानामिव बुद्धोऽप्यस्मिन्नेव संसारेऽनादिकालादारभ्य संसरति स्म। पश्चात्काललब्धिवशात् शुभकर्म कृत्वा काश्चिच्छुभगतीः प्राप्तवान्। क्रमेण च स शुद्धोदनगृहे सिद्धार्थो बभूव तत्र कानिचिद्दिनानि यौवनसुखमनुभूय तेष्वसन्तुष्टः सन् यौवनावस्थायामेव स कलत्रपुत्रादिपरिग्रहं परित्यज्य सुदुष्करं तपश्चकार। क्रमेण च संसारकारणीभूतरागादिभावान् त्यक्त्वा बुद्धो बभूव। तदनन्तरं स सर्वसंसारिजीवान् दुःखनिवृत्त्युपायं बोधयित्वा निर्वाणं प्राप्तवान्। अयमेव भावो टीकाकारेण श्लोकेऽस्मिन् प्रदर्शितः।

---

१ 'चेति' इति पदं 'ख' पुस्तके न विद्यते। २ 'स्वाभिधेय०' इत्यस्य स्थाने 'अभिधेय०' इति पाठो विद्यते 'ख' पुस्तके। ३ सर्वेषां शब्दानां स्वाभिधेयप्रतिपादनपरत्वात्। 'न' इति पदं 'क' पुस्तके न विद्यते। ४ 'अभिधेये तु निःप्रयोजने तत्प्रतिपत्तये' इति पाठान्तरं 'ख' पुस्तके। ५ 'तत्प्रतिपत्तये' इति पाठान्तरम् 'ख' पुस्तके। ६ यतः—सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥ १॥ यावत् प्रयोजनेनास्य सम्बन्धो नाभिधीयते। असम्बद्धप्रलापित्वाद्भवेत्तावदसङ्गतिः॥ २॥ तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः। शास्त्रावतारसम्बन्धो वाच्यो नान्योऽस्ति निष्फलः॥ ३॥ ७ 'उपायो व्युत्पादनस्य' इत्यस्य स्थाने 'उपयोग्युत्पादनस्य' इति पाठान्तरम् 'ख' पुस्तके। ८ 'वाच्यम्' इति पाठान्तरम् 'ख' पुस्तके। ९ 'सामर्थ्यम्—एकं तु वदत्' इति पाठान्तरं 'ख' पुस्तके। 'क' पुस्तके नैतान्यक्षराणि जीर्णतयाऽवलोकितुमर्हाणि।

सामर्थ्याद्दर्शयति । तत्र तदित्यभिधेयपदम् । व्युत्पाद्यत इति प्रयोजनपदम्[1] । प्रयोजनं चात्र वक्तुः प्रकरणकरणव्यापारस्य चिन्त्यते श्रोतुश्च श्रवणव्यापारस्य । तथा हि—सर्वे प्रेक्षावन्तः प्रवृत्तिप्रयोजनमभिसन्धाय[2] प्रवर्तन्ते । तत्राऽऽचार्येण[3] प्रकरणं किमर्थं कृतं श्रोतृभिश्च किमर्थं श्रूयत इति संशये व्युत्पादनं प्रयोजनमभिधीयते[4] । सम्यग्ज्ञानं व्युत्पाद्यमानानात्मानं[5] व्युत्पादकं[6] कर्तुं प्रकरणमिदं कृतं; शिष्यैश्चाचार्यप्रयुक्तात्मनो व्युत्पत्तिमिच्छद्भिः प्रकरणमिदं[7] श्रूयत इति प्रकरणकरणश्रवणयोः प्रयोजनं व्युत्पादनम् । सम्बन्धप्रदर्शनपदं तु न विद्यते । सामर्थ्यादेव तु स प्रतिपत्तव्यः[8] । प्रेक्षावता हि सम्यग्ज्ञानव्युत्पादनाय प्रकरणमिदमारब्धमतोऽयमेवोपायोऽस्य इति दर्शित एवोपायोपेयभावः प्रकरणप्रयोजनयोः सम्बन्ध इति ।

ननु[9] च प्रकरणश्रवणात्प्रागुक्तान्यप्यभिधेयादीनि[10] प्रमाणाभावात्प्रेक्षावद्भिर्न गृह्यन्ते तत्किमेतैरारम्भप्रदेशे[11] उक्तैः । सत्यम्[12] । अश्रुते प्रकरणे कथितान्यपि न निश्चीयन्ते उक्तेषु त्वप्रमाणकेष्वप्यभिधेयादिषु संशय उत्पद्यते संशयाच्च प्रवर्तन्ते । अर्थसंशयोऽपि हि प्रवृत्त्यङ्गम् प्रेक्षावताम् । अनर्थसंशयो[13] निवृत्त्यङ्गम् । अत एव शास्त्रकारेणैव पूर्वं सम्बन्धादीनि युज्यन्ते वक्तुम् । [14]व्याख्यातॄणां हि वचनं [15]क्रीडार्थमन्यथापि सम्भाव्यते । शास्त्रकृतां तु प्रकरणप्रारम्भे न विपरीताभिधेयाद्यभिधाने प्रयोजनमुत्पश्यामो नापि प्रवृत्तिम् । [16]अतस्तेषु[17] संशयो युक्तः । अनुक्तेषु[18] तु प्रतिपत्तृभिर्निष्प्रयोजनमभिधेयं संभाव्येतास्य प्रकरणस्य काकदन्तपरीक्षाया इव, अशक्यानुष्ठानं वा [19]ज्वरहरतक्षकचूडारत्नालङ्कारोपदेशवत् , अनभिमतं वा प्रयोजनं मातृविवाहक्रमोपदेशवत् , [20]अन्यतो वा प्रकरणाल्लघुतर

---

१ ख० 'प्रयोजनपदम्' । २ सम्यक्प्रकारेणानुसन्धाय । ३ 'च' इति पदं 'क' पुस्तके न विद्यते । ४ प्रयोजनस्य लक्षणमिदम् । ५ बोधयमानान् शिष्यान् प्रति । ख. व्युत्पाद्यमानानाम् । ६ विशेषेणोत्पादयत्यर्थमिति व्युत्पादकः बोधक इति यावत् । ७ 'इदम्' इति पदं ख. पुस्तके न विद्यते । ८ ज्ञातव्यः । ९ ननुपदेन शङ्का उच्यते सर्वत्र । १० 'अपि' इति पदं 'ख' पुस्तके न विद्यते । ११ 'प्रदेश' इत्यशुद्धः पाठो विद्यते मुद्रितपुस्तके । १२ सत्यमित्यर्धस्वीकारे । १३ 'ख' पुस्तके 'अपि' इत्यधिकः पाठो विद्यते । १४ ख. 'व्याख्यातॄणां टीकाकाराणाम्' १५ क. 'क्रीडार्थं०' १६ यथार्थप्रयोजनाभावात् । १७ सम्बन्धादिषु ॥ १८ हेतुसम्बन्धादिषु ॥ १९ ख. "ज्वरहरतक्षक०" । २० ख, पुस्तकस्य "अन्याप्रकरणात्" इति पाठान्तरमत्र प्रतीयते ।

उपायः प्रयोजनस्य, अनुपाय एव वा प्रकरणं सम्भाव्येत[१]। एतासु चानर्थसम्भावनास्वेकस्यामप्यनर्थसम्भावनायां न प्रेक्षावन्तः प्रवर्तन्ते। अभिधेयादिषु[२]अर्थसम्भावनाऽनर्थसम्भावना विरुद्धोत्पद्यते। तया तु[३] प्रेक्षावन्तः प्रवर्तन्ते। इति प्रेक्षावतां प्रवृत्त्यङ्गमर्थसम्भावनां कर्तुं सम्बन्धादीन्यभिधीयन्त इति स्थितम्।

अविसंवादकं[४] ज्ञानं सम्यग्ज्ञानम्। लोके च पूर्वमुपदर्शितमर्थं प्रापयन्सम्वादक[५] उच्यते तद्वज्ज्ञानमपि स्वयं[६] प्रदर्शितमर्थं प्रापयत्संवादकमुच्यते। प्रदर्शिते चार्थे प्रवर्तकत्वमेव प्रापकत्वम्। नान्यत्। तथा हि—न ज्ञानं जनयदर्थं[७] प्रापयति। अपि त्वर्थे पुरुषं प्रवर्तयत्प्रापयत्यर्थम्। प्रवर्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव। न हि पुरुषं हठात्प्रवर्तयितुं शक्नोति विज्ञानम्[८]। अत एव [९]चार्थाधिगतिरेव प्रमाणफलम्। अधिगते[१०] चार्थे प्रवर्तितः पुरुषः प्रापितश्चार्थः। तथा च सत्यर्थाधिगमात्समाप्तः प्रमाणव्यापारः। अत एवं[११]नधिगतविषयं प्रमाणम्। येनैव हि ज्ञानेन प्रथममधिगतोऽर्थस्तेनैव प्रवर्तितः पुरुषः प्रापितश्चार्थः। तत्रैवार्थे[१२] किमन्येन ज्ञानेनाधिकं कार्यम्। ततोऽधिगतविषयमप्रमाणम्। तत्र योऽर्थो दृष्टत्वेन[१३] ज्ञातः स प्रत्यक्षेण प्रवृत्तिविषयीकृतः[१४]। यस्माद्यस्मिन्नर्थे प्रत्यक्षस्य साक्षात्कारित्वव्यापारो विकल्पेनानुगम्यते तस्य प्रदर्शकं प्रत्यक्षम्। तस्माद्दृष्टतया ज्ञातः प्रत्यक्षदर्शितः। अनुमानन्तु लिङ्गदर्शनान्निश्चिन्वत्[१५] प्रवृत्तिविषयं दर्शयति। यथा च प्रत्यक्षं प्रतिभासमानं नियतमर्थं दर्शयति, अनुमानं च लिङ्गसम्बद्धं[१६] नियतमर्थं दर्शयति। अत एते नियतस्यार्थस्य[१७] प्रदर्शके। तेन ते प्रमाणे। नान्यद्विज्ञानम्। प्राप्तुं शक्यमर्थमादर्शयत्[१८]प्रापकम्। प्रापकत्वाच्च प्रमाणम्। आभ्यां

---

१ ख. पुस्तके संख्यावाची शब्दः '५' अपि दृश्यतेऽत्र। चतुर्णां पूर्वाणामप्यग्रे संख्या दृश्यन्ते। २ ख. पुस्तके 'त्तक्तेषु' पाठान्तरमुपलभ्यते। यच्चाशुद्धत्वात् 'उक्तषु' इत्यस्य स्थाने प्रयुक्तमिवावलोक्यते। ३ 'तु' इति पदं ख. पुस्तके न विद्यते। ४ ख. 'अभिसंवादसंज्ञानम्' इति पाठान्तरमशुद्धं प्रतीयते। ५ न खलु पूर्वमुपदर्शितेऽर्थे प्रवर्तकत्वमपि स्वपूर्वमुपदर्शितेऽर्थे प्रवर्तकत्वं संवादकत्वम्। ६ 'स्वयम्' इति पदं 'क' पुस्तके न विद्यते। ७ उत्पत्तिक्षण एव। ८ ख. ज्ञानम्। ९ 'च' इतिपदं ख. पुस्तके नैवोपलभ्यते। १० ज्ञाते। ११ 'च' इत्यधिकं पदं ख. पुस्तके। १२ ख. तत्रैव चार्थे'। १३ प्रत्यक्षदृष्टत्वेन। १४ ख. प्रवृत्तविषयः। १५ निश्चयं कुर्वत्। १६ क. पुस्तकस्य 'लिङ्गसम्बन्धम्' इति पाठोऽशुद्धो प्रतीयते। १७ ख. 'नियतार्थस्य'। १८ ख. 'उपदर्शयत्'

प्रमाणाभ्यामन्येन च ज्ञानेन प्रदर्शितो[1]ऽर्थः कश्चिदत्यन्तविपर्यस्तः[2]। यथा मरीचिकासु जलम्। स चासत्त्वात्प्राप्तुमशक्यः। कश्चिदनियतो भावाभावयोः। यथा संशयार्थः। न च भावाभावाभ्यां युक्तोऽर्थो जगत्यस्ति। ततः प्राप्तुमशक्यस्तादृशः। सर्वेण चालिङ्गजेन विकल्पेन नियामकमदृष्ट्वा प्रवृत्तेन भावाभावयोरनियत एवार्थो दर्शयितव्यः। स च प्राप्तुमशक्यः। तस्मादशक्यप्रापणमत्यन्तविपरीतं[3] भावाभावनियतं चार्थं दर्शयदप्रमाणमन्यज्ज्ञानम्। अर्थक्रियार्थिभिश्चार्थक्रियासमर्थार्थ[4]प्राप्तिनिमित्तं ज्ञानं मृग्यते। यच्च तैर्मृग्यते तदेव[5] तेन शास्त्रे विचार्यते। ततोऽर्थक्रिया समर्थवस्तुप्रदर्शकं[6] सम्यग्ज्ञानम्। यच्च तेन प्रदर्शितं तदेव प्रापणीयम्। अर्थाधिगमात्मकं[7] हि प्रापकमित्युक्तम्। तत्र प्रदर्शितान्यद्वस्तु भिन्नाकारं भिन्नदेशं भिन्नकालं च। विरुद्धधर्मसंसर्गाद्ध्यन्यद्वस्तु। देशकालाकारभेदश्च विरुद्धधर्मसंसर्गः[8]। तस्मादन्याकारवद्वस्तुग्राहि[9] नाकारान्तरवति वस्तुनि प्रमाणम्। यथा पीतशङ्खग्राहि शुक्ले शङ्खे। देशान्तरस्थग्राहि च न देशान्तरस्थे प्रमाणम्। यथा कुञ्चि[10]काविवरदेशस्थायां मणिप्रभायां मणिग्राहि ज्ञानं नापवरकदेशस्थे मणौ। कालान्तरयुक्तग्राहि च न कालान्तरवति वस्तुनि प्रमाणम्। यथार्द्धरात्रे मध्याह्नकालवस्तुग्राहि स्वप्नज्ञानं नार्द्धरात्रकाले वस्तुनि प्रमाणम्। ननु च[11] देशनियतमाकारनियतं च प्रापयितुं शक्यं यत्कालं तु परिच्छिन्नं तत्कालं न शक्यं प्रापयितुम्। नोच्यते यस्मिन्नेव काले परिच्छिद्यते तस्मिन्नेव काले प्रापयितव्यमिति। अन्यो हि दर्शनकालोऽन्यश्च प्राप्तिकालः। किं तु यत्कालं परिच्छिन्नं तदेव[12] तेन प्रापणीयम्। अभेदाध्यव[13]सायाच्च संतानगतमेकत्वं द्रष्टव्यमिति।

सम्यग्ज्ञानं पूर्वं कारणं यस्याः सा तथोक्ता। कार्यात्पूर्वं भवत्कारणं

---

१ ख. 'दर्शि:'। २ विरुद्धः। ३ ख. पुस्तकस्य 'अत्यन्तविपरीतभावाभावादानि' इति पाठोऽशुद्धो प्रतीयते। ४ 'अर्थक्रियासमर्थ' इति पाठो ख. पुस्तके न विद्यते। ५ 'तेन' इति पदं क० पुस्तके नैवोपलभ्यते। ६ ख० अर्थाविजियासमर्थवस्त्वधिगमात्मकत्वम्। ७ अर्थाधिगमे। ८ क० पुस्तकस्य 'संसर्ग्रः' ख० पुस्तकस्य च 'संसर्गेः' इति पाठावशुद्धौ। ९ ख० 'अन्याकारवस्तु'। १० क० 'कुंविका'। ११ 'च' इति पदं क० पुस्तके न विद्यते। १२ 'तेन' इति पदं क० पुस्तके न विद्यते। १३ अध्यवसायो ज्ञानम्।

पूर्वमुक्तम्, कारणशब्दोपादाने तु पुरुषार्थसिद्धेः साक्षात्कारणं मन्यते[2] । पूर्वशब्दे तु पूर्वमात्रम् । द्विविधं च सम्यग्ज्ञानम् अर्थक्रियानिर्भासम्, अर्थक्रियासमर्थे च प्रवर्तकम् । तयोर्यत्प्रवर्तकं तदिह परीक्ष्यते । तच्च पूर्वमात्रम् । न तु साक्षात्कारणम् । सम्यग्ज्ञाने हि सति पूर्वदृष्टस्मरणम् । स्मरणादभिलाषः । अभिलाषात्प्रवृत्तिः । प्रवृत्तेश्च प्राप्तिः । ततो न साक्षाद्धेतुः । अर्थक्रियानिर्भासे[5] तु यद्यपि साक्षात्प्रवृत्तिस्तथापि तन्न परीक्षणीयम् । यत्रैव हि प्रेक्षावन्तोऽर्थिनः साशङ्कास्तत्परीक्ष्यते । अर्थक्रियानिर्भासे च ज्ञाने[7] सति सिद्धः पुरुषार्थः । तेन तत्र न साशङ्का अर्थे[8] ज्ञाते । अतस्तन्न परीक्षणीयम् । तस्मात्परीक्षार्हमसाक्षात्कारणं सम्यग्ज्ञानमादर्शयितुं कारणशब्दं परित्यज्य पूर्वग्रहणं कृतम् ।

पुरुषस्यार्थः । अर्थ्यत इत्यर्थः । काम्यत इति यावत् । हेयोऽर्थ उपादेयो वा । हेयो ह्यर्थो हातुमिष्यते । उपादेयोऽप्युपादातुम् । न च हेयोपादेयाभ्यामन्यो राशिरस्ति । उपेक्षणीयोऽप्यनुपादेयत्वाद्धेय एव । तस्य सिद्धिर्हानमुपादानं च । हेतुनिबन्धना हि[10] सिद्धिरुत्पत्तिरुच्यते । ज्ञाननिब[11]न्धना तु सिद्धिरनुष्ठानम् । हेयस्य हानमनुष्ठानम् । उपादेयस्य चोपादानम् । ततो हेयोपादेययोर्हानोपादानलक्षणानुष्ठितिः सिद्धिरित्युच्यते[12] ।

सर्वा चासौ पुरुषार्थसिद्धिश्चेति । सर्वशब्द इह द्रव्यकार्त्स्न्ये[13] वृत्तो न च[14] प्रकारकार्त्स्न्ये । ततो नायमर्थः । द्विप्रकारापि सिद्धिः सम्यग्ज्ञाननिबन्धनेति । अपि त्वयमर्थः । या काचित्सिद्धिः सा सर्वा कृत्स्नैवासौ सम्यग्ज्ञाननिबन्धनैवेति[15] । मिथ्याज्ञानाद्धि काकतालीयापि नास्त्यर्थसिद्धिः । तथा हि—यदि प्रदर्शितमर्थं प्रापयत्येवं ततो भवत्यर्थसिद्धिः ।

---

१ क० ख० शब्दापादाने । २ ख० पुस्तकस्य 'गम्यत' इति पाठोऽशुद्धोऽस्ति । ३ 'मध्ये' इत्यधिकं ख० पुस्तके । ४ कामना । ५ 'ख' अर्थ क्रियानिर्भासेन । ६ ख० 'प्राप्तिः' । ७ क० 'ज्ञाने' । ८ ख: 'अर्थिनः' । ९ 'अपि' पदं क० पुस्तके न विद्यते । १० हेतुरस्ति निबन्धनं कारणं यस्याः । ११ ज्ञानमस्ति निबन्धनं यस्याः । १२ 'इति' इति पदं ख० पुस्तके न विद्यते । १३ कृत्स्नस्तु सम्पूर्णः । कृत्स्नस्य भावः कार्त्स्न्यं तस्मिन् । १४ 'च' इति पाठः क० पुस्तके न विद्यते । १५ 'एव' इति पाठः ख० पुस्तके नैवोपलभ्यते ।

प्रदर्शितं च प्रापयत्सम्यग्ज्ञानमेव । प्रदर्शितं चाप्रापयन्मिथ्याज्ञानम् । अप्रापकं च कथमर्थसिद्धिनिबन्धनं स्यात् । तस्माद्यन्मिथ्याज्ञानं न ततोऽर्थसिद्धिः[1] । यतश्चार्थसिद्धिस्तत्सम्यग्ज्ञानमेव । अत एव सम्यग्ज्ञानं यत्नतो व्युत्पादनीयम् । यतस्तदेव पुरुषार्थसिद्धिनिबन्धनम् । ततो यावद्ब्रूयात्[2]पुरुषार्थसिद्धिः सम्यग्ज्ञाननिबन्धनेति तावदुक्तं सर्वा सा[3] सम्यग्ज्ञानपूर्विकेति । इति शब्दस्तस्मादित्यस्मिन्नर्थे । यत्तदोश्च नित्यमभिसम्बन्धः । तदयमर्थो यस्मात्सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिस्तस्मात्तद्व्युत्पाद्यते[4] । यद्यपि च समासे गुणीभूतं सम्यग्ज्ञानं तथापीह प्रकरणे व्युत्पादयितव्यत्वात्प्रधानम् । ततस्तस्यैव तच्छब्देन सम्बन्धः । व्युत्पाद्यते[5] इति विप्रतिपत्तिनिराकरणेन प्रतिपाद्यते व्युत्पाद्यत इति ।

चतुर्विधा चात्र विप्रतिपत्तिः । संख्यालक्षणगोचर[6]फलविषया । तत्र संख्याविप्रतिपत्ति[7]निराकर्तुमाह—

## द्विविधं सम्यग्ज्ञानम् ।

द्वौ विधौ[8] प्रकारावस्येति द्विविधम् । संख्याप्रदर्शनद्वारेण च व्यक्तिभेदो दर्शितो भवति । द्वे एव[9] सम्यग्ज्ञानव्यक्ती इति । व्यक्तिभेदे[10] प्रदर्शिते प्रतिव्यक्तिनियतं सम्यग्ज्ञानलक्षणमाख्यातुं शक्यम् । अप्रदर्शिते तु व्यक्तिभेदे सकलव्यक्त्यनुयायि[11] सम्यग्ज्ञानलक्षणमेकं न शक्यं वक्तुम् । ततो लक्षणभेदकथनाङ्गमेव संख्याभेदकथनम् । अप्रदर्शिते तु[12] व्यक्तिभेदात्मके संख्याभेदे लक्षणभेदस्य दर्शयितुमशक्यत्वात् । लक्षणनिर्देशाङ्गत्वादेव च प्रथमं संख्याभेदकथनम् ।

---

१ 'सिद्धि०' इत्यस्य स्थाने 'सिद्धेः' इति पाठः ख० पुस्तके । २ ख० पुस्तकस्य 'यावद्ब्रूयात्' इति पाठोऽशुद्धः प्रतीयते । क० 'या काचित्पुरुष०—सम्यग्ज्ञान०' ख० 'सा सम्यग्ज्ञान०' । ३ ख० पुस्तके 'सा' इति पदं न विद्यते । ४ 'तद्व्युत्पाद्यते' इत्यस्य स्थाने 'तत्सम्यग्ज्ञानं व्युत्पाद्यते' इति पाठः ख०पुस्तके । ५ 'व्युत्पाद्यते' इति पदं ख० पुस्तके न वर्तते । ६ गोचरस्तु विषयः । ७ विप्रतिपत्तिस्तु विवादः । ८ ख० द्वे विधे । ९ 'एव' इति पाठः क० पुस्तके न विद्यते । १० क० 'व्यक्तिभेदे' । ख० 'भेदे' । ११ 'सकलव्यक्त्यनुयायि' इति पदं ख० पुस्तकादानीतम् । क० पुस्तक इदम् सुपाठ्यम् । १२ 'तु' इति पाठोऽधिको विद्यतेऽत्र ख० पुस्तके ।

किं पुनस्तद्द्वैविध्यमित्याह—

## प्रत्यक्षमनुमानञ्च ।

प्रतिगतमाश्रितमक्षम् । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः । प्राप्तापन्नालङ्गतिसमासेषु परवल्लिङ्गप्रतिषेधात् । अभिधेयवल्लिङ्गे सति सर्वलिङ्गः प्रत्यक्षशब्दः सिद्धः । अक्षाश्रितत्वं च व्युत्पत्तिनिमित्तं शब्दस्य । न तु प्रवृत्तिनिमित्तम् । अनेन त्वक्षाश्रितत्वेनैकार्थसमवेतमर्थसाक्षात्कारित्वं लक्ष्यते । तदेव शब्दस्य प्रवृत्तिनिमित्तम् । ततश्च यत्किंचिदर्थस्य साक्षात्कारिज्ञानं तत्प्रत्यक्षमुच्यते । यदि त्वक्षाश्रितत्वमेव प्रवृत्तिनिमित्तं स्यादिन्द्रियज्ञानमेव प्रत्यक्षमुच्येत । न मानसादि । यथा गच्छतीति गौरिति गमनक्रियायां व्युत्पादितोऽपि गोशब्दो गमनक्रियोपलक्षितमेकार्थसमवेतं गोत्वं प्रवृत्तिनिमित्तीकरोति । तथा च गच्छत्यगच्छति च गवि गोशब्दः सिद्धो भवति ।

मीयतेऽनेनेति मानम् । करणसाधनेन मानशब्देन सारूप्यलक्षणं प्रमाणमभिधीयते । लिङ्गग्रहणसम्बन्धस्मरणस्य पश्चान्मानमनुमानम् । गृहीते पक्षधर्मे स्मृते च साध्यसाधनसम्बन्धेऽनुमानं प्रवर्तत इति पश्चात्कालभाव्युच्यते । चकारः । प्रत्यक्षानुमानयोस्तुल्यबलत्वं समुच्चिनोति । यथार्थाविनाभावित्वादर्थाविनाभावित्वादर्थं प्रापयत्प्रत्यक्षं प्रमाणम् । तद्वदर्थाविनाभावित्वादनुमानमपि परिच्छिन्नमर्थं प्रापयत्प्रमाणमिति ।

## तत्र कल्पनापोढमभ्रान्तं प्रत्यक्षम् ।

तत्रेति सप्तम्यर्थे वर्तमानो निर्धारणे वर्तते । ततोऽयं वाक्यार्थः । तत्र तयोः प्रत्यक्षानुमानयोरिति समुदायनिर्देशः । प्रत्यक्षमित्येकदेशः । तत्र समुदायात्प्रत्यक्षत्वजात्यैकदेशस्य पृथक्करणं निर्धारणम् । तत्र प्रत्यक्षत्वमनूद्य कल्पनापोढत्वमभ्रान्तत्वं च विधीयते । यत्तद्भवतामस्माकञ्चार्थेषु

१ 'द्वैविध्य' इति पाठः क० पुस्तके ख० पुस्तके च विद्यते । मुद्रितपुस्तकस्य सम्पादकस्य सम्मतौ 'द्विविधं' इति भवितव्यम् । अस्माकं मते तु प्रकृतः पाठः एव शोभनम् । २ 'अक्षाश्रितत्वेन' इत्यशुद्धः पाठः मुद्रितपुस्तकस्य । ३ ख० 'लभ्यते' । ४ ख० 'विज्ञानम्' । ५ कथ्यते । ६ ख० 'गृहीत०' । ७ ख० 'एकदेशनिर्देशः' । ८ क० 'प्रत्यक्ष' । ९ 'च' इति पदं ख० पुस्तके न विद्यते ।

साक्षात्कारिज्ञानं प्रसिद्धं तत्कल्पनापोढाभ्रान्तत्वयुक्तं[1] द्रष्टव्यम् । न चैतन्मन्तव्यं कल्पनापोढाभ्रान्तत्वं चेदप्रसिद्धं किमन्यत्प्रत्यक्षस्य ज्ञानस्य रूपमवशिष्यते । यत्प्रत्यक्षशब्दवाच्यं[2] सदनूद्येतेति । यस्मादिन्द्रियान्वयव्यतिरेकानुविधाय्यर्थेषु साक्षात्कारिज्ञानं प्रत्यक्षशब्दवाच्यं सर्वेषां सिद्धम्[3] । तदनुवादेन[4] कल्पनापोढाभ्रान्तत्वविधिः । कल्पनाया अपोढमपेतं[5] कल्पनापोढम् । कल्पनास्वभावरहितमित्यर्थः । अभ्रान्तमर्थक्रियाक्षमे वस्तुरूपेऽविपर्यस्तमुच्यते[6] । अर्थक्रियाक्षमं च[7] वस्तुरूपं सन्निवेशोपाधिर्धर्मात्मकम्[8] । तत्र यन्न भ्राम्यति तदभ्रान्तम् । एतच्च लक्षणद्वयं विप्रतिपत्तिनिराकरणार्थम्[9] । न त्वनुमाननिवृत्त्यर्थम् । यतः कल्पनापोढग्रहणेनैवानुमानं निवर्तितम् । तत्रासत्यभ्रान्तग्रहणे गच्छद्वृक्षदर्शनादि प्रत्यक्षं कल्पनापोढत्वात्स्यात् । ततो हि प्रवृत्तेन वृक्षमात्रमवाप्यत इति संवादकत्वात्सम्यग्ज्ञानम् । कल्पनापोढत्वाच्च प्रत्यक्षमिति स्यादाशङ्का । तन्निवृत्त्यर्थमभ्रान्तग्रहणम् । तद्धि भ्रान्तत्वान्न प्रत्यक्षम् । त्रिरूपलिङ्गजत्वाभावाच्च नानुमानम् । न च प्रमाणान्तरमस्ति । अतो गच्छद्वृक्षदर्शनादि मिथ्याज्ञानमित्युक्तं भवति । यदि मिथ्याज्ञानं कथं ततो वृक्षावाप्तिरिति[10] चेत्, न ततो वृक्षावाप्तिः । नानादेशगामी हि वृक्षस्तेन परिच्छिन्नः एकदेशनियतश्च वृक्षोऽवाप्यते[11] । ततो यद्देशो गच्छद्वृक्षो दृष्टस्तद्देशो नावाप्यते । यद्देशश्चावाप्यते स न दृष्ट इति । न तस्मात्कश्चिदर्थोऽवाप्यते । ज्ञानान्तरादेव तु[12] वृक्षादिरर्थोऽवाप्यते । इत्येवमभ्रान्तग्रहणं विप्रतिपत्तिनिरासार्थम्[13] । भ्रान्तं ह्यनुमानम् । [14]स्वप्रतिभासेऽनर्थेऽध्यवसायेन प्रवृत्तत्वात् । प्रत्यक्षं तु ग्राह्ये रूपे न विपर्यस्तम् । अपि त्वविसंवादकमभ्रान्तमिह ग्रहीतव्यम् । यतः सम्यग्ज्ञानमेव प्रत्यक्षम् । नान्यत् ।

तत्र सम्यग्ज्ञानत्वादेवाविसम्वादकत्वे लब्धे पुनरविसम्वादकग्रहणं

---

१ ख० तत्कल्पनापोढभ्रान्तत्व० । २ प्रकटीक्रियेत । ३ ख० प्रसिद्धं । ४ ख० तदनकल्पना० । ५ रहितम् । ६ अविरुद्धम् । ७ 'च' इति पदं क० पुस्तके नैवोपलभ्यते । ८ क० ख० वर्णात्मकम् । ९ ख० निरासार्थम् । १० प्राप्तिर्ज्ञप्तिरित्यर्थः । ११ प्राप्यते ज्ञायत इत्यर्थः । १२ ख० च । १३ '(विप्रतिप्रत्तिनिरासार्थं) तथाऽभ्रान्तग्रहणेनाप्यनुमाने निवर्त्तिते कल्पनापोढग्रहणं विप्रतिपत्तिनिरासार्थम्' इत्यधिको पाठो विद्यते ख० पुस्तक इति ज्ञातव्यम् । १४ ख० स्वप्रतिभासो (? स्वप्रतिभासे) ऽर्थाध्यवसायेन ।

निष्प्रयोजनमेव । एवं हि वाक्यार्थः स्यात् । प्रत्यक्षाख्यं यदविसम्वादकं ज्ञानं तत्कल्पनापोढमविसम्वादकं चेति । न चानेन द्विरविसम्वादग्रहणेन किञ्चित् । तस्माद्ग्राह्येऽर्थक्रियाक्षमे वस्तुरूपे यदविपर्यस्तं तदभ्रान्तमिह वेदितव्यम्[1] ।

कीदृशी पुनः कल्पनेह गृह्यत इत्याह—

## अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना तया रहितम् ।

अभिलाप्यते[2]ऽनेनेति अभिलापो वाचकः शब्दः। अभिलापेन संसर्गः [3]अभिलापसंसर्गः । एकस्मिञ्ज्ञानेऽभिधेयाकारस्याभिधानाकारेण सह ग्राह्याकारतया शीलनम्[4] । ततो यदैकस्मिञ्ज्ञानेऽभिधेयाभिधानयोराकारौ[5] संनिविष्टौ[6] भवतस्तदा संसृष्टेऽभिधानाभिधेये भवतः । अभिलापसंसर्गाय योग्योऽभिधेयाभासो[7] यस्यां प्रतीतौ सा तथोक्ता । तत्र काचित्प्रतीतिरभिलापेन[8] संसृष्टाभासा भवति । यथा व्युत्पन्नसंकेतस्य घटार्थकल्पना घटशब्दसंसृष्टार्थावभासा भवति[9] । काचित्त्वभिलापेनासंसृष्टाऽप्यभिलापसंसर्गयोग्याभासा भवति । यथा बालकस्याव्युत्पन्नसंकेतस्य कल्पना । तत्राभि[10]लापसंसृष्टाभासा कल्पनेत्युक्तावव्युत्पन्नसङ्केतस्य न संगृह्यते[11]। योग्यग्रहणे तु साऽपि संगृह्यते । यद्यप्यभिलापसंसृष्टाभासा[12] न भवति तदहर्जातस्य [13]बालकस्य कल्पना अभिलापसंसर्गयोग्यप्रतिभासा तु भवत्येव। या चाभिलापसंसृष्टा साऽपि योग्या। तत [14]उभयोरपि योग्यग्रहणेन सङ्ग्रहः ।

असत्यभिलापसंसर्गे कुतो [15]योग्यतावसितिरिति[16] चेत्। अनियतप्रतिभासत्वात् । अनियतप्रतिभासत्वं[17] च प्रतिभासनियमहेतोरभावात्। ग्राह्यो ह्यर्थो विज्ञानं जनयन्नियतप्रतिभासं कुर्यात् । यथा रूपं चक्षुर्विज्ञानं जनय-

१ ज्ञातव्यम् । २ ख० अभिलप्यते । ३ 'अभिलापसंसर्गः' इति पदं क० पुस्तके न विद्यते । ४ क० ख० मीलनम् । ५ ख० अभिधानाभिधेययोः । ६ ख० निविष्टौ । ७ ख० अभिधेयाकारभासः । ८ ख० अभिलाप० । ९ 'भवति' इति पदं ख० पुस्तके न विद्यते । १० संसृष्टाभासा, ख० संसृष्टप्रभासा (? ० संसृष्टप्रतिभासा) । ११ ख० संगृह्यते । १२ ख० आभासा, ख० प्रतिभासा । १३ इदं पदं क० पुस्तके न विद्यते। १४ अभिलापसंसर्गयोग्यप्रतिभासाऽभिलापसंसृष्टयोः । १५ योग्यता, ख० योग्यत्व० । १६ स्थानम् । १७ प्रतिभासत्वे ।

नियतप्रतिभासं जनयति । विकल्पविज्ञानं त्वर्थान्नोत्पद्यते । ततः प्रतिभासनियमहेतोरभावादनियतप्रतिभासम् ।

कुतः पुनरेतद्विकल्पोऽर्थान्नोत्पद्यत इति । अर्थसंनिधिनिरपेक्षत्वात् । बालोऽपि हि यावद्दृश्यमानं स्तनं स एवायमिति पूर्वदृष्टत्वेन न प्रत्यवमृशति तावन्नोपरतरुदितो मुखमर्पयति स्तने । पूर्वदृष्टापरदृष्टं चार्थमेकीकुर्वद्विज्ञानमसन्निहितविषयम् । पूर्वदृष्टस्यासन्निहितत्वात् । असन्निहितविषयं चार्थनिरपेक्षम् । अनपेक्षं च प्रतिभासनियमहेतोरभावादनियतप्रतिभासम् । तादृशं चाभिलापसंसर्गयोग्यम् । इन्द्रियविज्ञानं तु सन्निहितमात्रग्राहित्वादर्थसापेक्षम् । अर्थस्य च प्रतिभासनियमहेतुत्वान्नियतप्रतिभासम् । ततो नाभिलापसंसर्गयोग्यम् । अत एव स्वलक्षणस्यापि वाच्यवाचकभावमभ्युपगम्यैतदविकल्पकत्वमुच्यते ।

यद्यपि हि स्वलक्षणमेव वाच्यं वाचकं च भवेत्तथाप्यभिलापसंसृष्टार्थ विज्ञानं सविकल्पकम् । न चेन्द्रियविज्ञानमर्थेन नियमितप्रतिभासत्वादभिलापसंसर्गयोग्यप्रतिभासं भवतीति निर्विकल्पकम् । श्रोत्रज्ञानं तर्हि शब्दस्वलक्षणग्राहि । शब्दस्वलक्षणं किञ्चिद्वाच्यं किञ्चिद्वाचकमित्यभिलापसंसर्गयोग्यप्रतिभासं स्यात् । तथा च सविकल्पकं स्यात् । नैष दोषः । सत्यपि स्वलक्षणस्य वाच्यवाचकभावे सङ्केतकालदृष्टत्वेन गृह्यमाणं स्वलक्षणं वाच्यं वाचकं च गृहीतं स्यात् । न च सङ्केतकालभाविदर्शनविषयत्वं वस्तुनः सम्प्रत्यस्ति ।

यथा हि सङ्केतकालभाविदर्शनमद्य निरुद्धं तद्वत्तद्विषयत्वमप्यर्थस्याद्य नास्ति । ततः पूर्वकालदृष्टत्वमपश्यच्छ्रोत्रज्ञानं न वाच्यवाचकभावग्राहि । अनेनैव न्यायेन योगिज्ञानमपि सकलशब्दार्थावभासित्वेऽपि सङ्केतकालदृष्टत्वाग्रहणान्निर्विकल्पकम् । तया कल्पनया कल्पनास्वभावेन रहितं शून्यं सज्ज्ञानं यदभ्रान्तं तत्प्रत्यक्षमिति परेण सम्बन्धः । कल्पनापोढत्वाभ्रान्तत्वे परस्परसापेक्षे प्रत्यक्षलक्षणं न प्रत्येकमिति दर्शयितुं तया रहितं यदभ्रान्तं तत्प्रत्यक्षमिति लक्षणयोः परस्परसापेक्षयोः प्रत्यक्षविषयत्वं दर्शितमिति ।

---

१ विकल्पविज्ञानम् । २ स्मरति । ३ सन्निहितमात्र० ख० संनिहितार्थमात्र० । ४ ख० श्रोत्रविज्ञानं । ५ 'शब्द०' इति पाठः ख० पुस्तके न विद्यते । ६ शब्दस्वलक्षणं, ख० शब्दे स्वलक्षणं च । ७ ज्ञानं, ख० विज्ञानं । ८ ख० पुस्तके 'सूत्रेण ( लिखितपुस्तके सूत्रेण )' इत्यधिकः पाठो विद्यते ।

## तिमिराशुभ्रमणनौयानसंक्षोभाद्यनाहितविभ्रमं ज्ञानं प्रत्यक्षम् ।

तिमिरमक्ष्णोर्विप्लवः[1] । इन्द्रियगतमिदं विभ्रमकारणम्[2] । आशुभ्रमणमलातादेः । मन्दं हि[3] भ्राम्यमाणेऽलातादौ न चक्रभ्रान्तिरुत्पद्यते । तदर्थमाशुग्रहणेन विशेष्यते भ्रमणम् । एतच्च विषयगतं विभ्रमकारणम् । नावा गमनं नौयानम् । गच्छन्त्यां नावि स्थितस्य गच्छद्वृक्षादिभ्रान्तिरुत्पद्यत इति यानग्रहणम् । एतच्च बाह्याश्रयस्थितं विभ्रमकारणम् । संक्षोभो वातपित्तश्लेष्मणाम् । वातादिषु हि क्षोभं गतेषु ज्वलितस्तम्भादिभ्रान्तिरुत्पद्यते । एतच्चाध्यात्मगतं विभ्रमकारणम् । सर्वैरेव च विभ्रमकारणैरिन्द्रियविषयबाह्याध्यात्मिकाश्रयगतैरिन्द्रियमेव विकर्तव्यम् । अविकृत इन्द्रिय इन्द्रियभ्रान्त्ययोगात् । एते संक्षोभपर्यन्ता आदयो येषां ते तथोक्ताः । आदिग्रहणेन काचकामलादय इन्द्रियस्था गृह्यन्ते । आशुनयनानयनादयो विषयस्थाः । आशुनयनानयने हि[9] क्रियमाणेऽलातादाव[10]भिन्नवर्णदण्डाभासा भ्रान्तिर्भवति । हस्तियानादयो बाह्याश्रयस्था गाढमर्मप्रहारादय आध्यात्मिकाश्रयस्था विभ्रमहेतवो गृह्यन्ते । तैरनाहितो[11][12] विभ्रमो यस्मिंस्तत्तथाविधं ज्ञानं प्रत्यक्षम् ।

तदेवं लक्षणमाख्याय यैरिन्द्रियमेव द्रष्टृ कल्पितं मानसप्रत्यक्षलक्षणे च दोष उद्भावितः स्वसंवेदनं च नाभ्युपगतं योगिज्ञानं च तेषां विप्रतिपत्तिनिराकरणार्थं[13] प्रकारभेदं प्रत्यक्षस्य दर्शयन्नाह—

## तच्चतुर्विधम् ।

## इन्द्रियज्ञानम् ।

इन्द्रियस्य ज्ञानमिन्द्रियज्ञानम् । इन्द्रियाश्रितं यत्तत्प्रत्यक्षम् ।

---

१ नेत्रयोः । २ ख० भ्रम० । ३ 'हि' इति पदं ख० पुस्तक एवोपलभ्यते । ४ ख० भ्राम्यमाणे । ५ क० भ्रम० । ६ ज्वलित०, ख० ज्वलितरूपं । ७ ख० आध्यात्मिकं भ्रान्तिकारणम् । ८ 'इन्द्रिय' इति पाठः ख० पुस्तके नैवोपलभ्यते । ९ 'हि' इति पदं ख० पुस्तके नैवोपलभ्यते । १० ख० अलाते । ११ ख० एतैः । १२ अनाहितः दूरीकृतः । १३ ख० निरासार्थम् ।

मानसप्रत्यक्षे[1] परैर्[2] दोष उद्भावितस्[3]तं निराकर्तुं मानसप्रत्यक्षलक्षणमाह—

**स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तन्मनोविज्ञानम् ।**

स्व आत्मीयो विषय इन्द्रियज्ञानस्य[4] तस्यानन्तरः । न विद्यतेऽन्तरमस्येत्यनन्तरः[5] । अन्तरं च व्यवधानं विशेषश्चोच्यते । ततश्चान्तरे प्रतिषिद्धे समानजातीयो द्वितीयक्षणभाव्युपादेयक्षण इन्द्रियविज्ञानविषयस्य गृह्यते । तथा च सतीन्द्रियज्ञानविषयक्षणादुत्तरक्षण एकसन्तानान्तर्भूतो गृहीतः । स सहकारी यस्येन्द्रियविज्ञानस्य तत्तथोक्तम् । द्विविधश्च सहकारी । परस्परोपकारी एककार्यकारी च । इह च क्षणिके वस्तुन्यतिशयाधानायोगादेककार्यकारित्वेन सहकारी गृह्यते । विषयविज्ञानाभ्यां हि मनोविज्ञानमेकं[6] क्रियते यतस्तदनयोर्न[7] परस्परसहकारित्वम् । ईदृशेनेन्द्रियविज्ञानेनालम्बनप्रत्ययभूतेनापि योगिज्ञानं जन्यते । तन्निरासार्थं समनन्तरप्रत्ययग्रहणं कृतम्[8] । समश्चासौ ज्ञानत्वेनानन्तरश्चासावव्यवहितत्वेन स चासौ[9] प्रत्ययश्च हेतुत्वात्समनन्तरप्रत्ययस्तेन जनितम् ।

तदनेनैकसन्तानान्तर्भूतयोरेवेन्द्रियज्ञानमनोज्ञानयोर्जन्यजनकभावे मनोविज्ञानं प्रत्यक्षमित्युक्तं[10] भवति । ततो योगिज्ञानं परसन्तानवर्ति निरस्तम्[11] । यदा चेन्द्रियज्ञानविषयादन्यो विषयो मनोविज्ञानस्य तदा गृहीतग्रहणादासञ्जितो[12]ऽप्रामाण्यदोषो निरस्तः । यदा चेन्द्रियज्ञानविषयोपादेयभूतः क्षणो गृहीतस्तदेन्द्रियज्ञानेनागृहीतस्य विषयान्तरस्य ग्रहणादन्धबधिराद्यभावदोषप्रसंगो निरस्तः । एतच्च मनोविज्ञानमुपरतव्यापारे चक्षुषि प्रत्यक्षमिष्यते । व्यापारवति तु चक्षुषि यद्रूपज्ञानं तत्सर्वं चक्षुराश्रितमेव । इतरथा चक्षुराश्रितत्वानुपपत्तिः कस्यचिदपि विज्ञानस्य[13] ।

---

१ ख० मानसे च प्रत्यक्षे । २ अन्यवादिभिः । ३ प्रकटीकृतः । ४ ख० विज्ञानस्य । ५ 'अनन्तरः' इति पदं ख० पुस्तक एवोपलभ्यते । ६ विषयविज्ञानाभ्यां हि मनोविज्ञानं, ख० विषयविज्ञानाभ्यां मनोविज्ञानाभ्यां मनोविज्ञानम् । ७ तदनयोर्न परस्परसहकारित्वं, ख० तदनयोः परस्परस्य सहकारित्वम् । ८ 'कृतम्' इति पदं ख० पुस्तके नैवोपलभ्यते । ९ इदं पदं ख० पुस्तके न विद्यते । १० 'इति' इति पदं ख० पुस्तके न विद्यते । ११ अपाकृतं खण्डितमित्यभिप्रायः । १२ प्राप्तः । १३ ख० ज्ञानस्य ।

एतच्च सिद्धान्तप्रसिद्धं मानसं प्रत्यक्षम् । न त्वस्य प्रसाधकमस्ति प्रमाणम् । एवं जातीयकं तद्यदि स्यान्न कश्चिद्दोषः स्यादिति वक्तुं लक्षणमाख्यातमस्येति ।

स्वसंवेदनमाख्यातुमाह—

**सर्वचित्तचैत्तानामात्मसंवेदनम् ।**

चित्तमर्थमात्रग्राहि । चैत्ता विशेषावस्थाग्राहिणः सुखादयः । सर्वे च ते चित्तचैत्ताश्च सर्वचित्तचैत्ताः । सुखादय एव स्फुटानुभवत्वात्स्वसंविदिताः । नान्या चित्तावस्थेत्येतदाशङ्कानिवृत्त्यर्थं सर्वग्रहणं कृतम् । नास्ति सा काचिच्चित्तावस्था यस्यामात्मनः संवेदनं न प्रत्यक्षं स्यात् । येन हि रूपेणात्मा वेद्यते तद्रूपमात्मसंवेदनं प्रत्यक्षम् । इह च रूपादौ वस्तुनि दृश्यमानेऽन्तरः सुखाद्याकारस्तुल्यकालं संवेद्यते । न च गृह्यमाणाकारो नीलादिः सातादिरूपो वेद्यते इति वक्तुं शक्यम्[2] । यतो नीलादिः सातरूपेणा[3]नुभूयत इति न निश्चीयते । यदि हि सातादिरूपो[4]ऽयं नीलादिरनुभूयत इति निश्चीयेत स्यात्तदा[5] तस्य सातादिरूपत्वम् । यस्मिन्रूपे प्रत्यक्षस्य साक्षात्कारित्वव्यापारो विकल्पेनानुगम्यते तत्प्रत्यक्षम् । न च नीलस्य सातरूपत्वमनुगम्यते । तस्मादसातान्नीलाद्यर्थादन्यदेव सातमनुभूयते नीलानुभवकाले । तच्च ज्ञानमेव । ततोऽस्ति ज्ञानानुभवः । तच्च[6] ज्ञानरूपं वेदनमात्मनः साक्षात्कारि निर्विकल्पकमभ्रान्तं च तस्मात्प्रत्यक्षम् ।

योगिप्रत्यक्षं व्याख्यातुमाह—

**भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं चेति ।**

भूतः सद्भूतोऽर्थः । प्रमाणेन दृष्टश्च सद्भूतः । यथा चत्वार्या-

---

१ बाह्यार्थास्तित्ववादिनां सौत्रान्तिकानां मते वस्तु द्विविधम् । बाह्यमान्तरञ्च । बाह्यं पुनर्द्विविधम् । भूतं भौतिकञ्च । आन्तरमपि द्विविधम् । चित्तं चैत्तञ्च । चैत्तं चैत्तिकमपि कथ्यते । भूतं पृथिव्यादयश्चत्वारः परमाणवः । भौतिकं रूपादयश्चक्षुरादयश्च । चित्तं विज्ञानम् । चैत्तिकं रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्चस्कन्धाः । विज्ञानं पुनर्द्विविधम् । आलयविज्ञानमहमित्याकारकम् । प्रवृत्तिविज्ञानमिन्द्रियादिजन्यं रूपादिविषयम् । २ वक्तुं शक्यं, ख० शक्यं वक्तुं । ३ सातरूपेण, ख० सातानुरूपेण । ४ सातादिरूपः, ख० सतरूपः । ५ 'तदा' इति पदं ख० पुस्तक एवोपलभ्यते । ६ तच्च ज्ञानरूपं वेदनं, ख० तत्वज्ञानस्वरूपवेदनम् ।

र्यसत्यानि[1]। भूतार्थस्य भावना पुनः पुनश्चेतसि विनिवेशनम्[2]। भावनायाः[3] प्रकर्षो भाव्यमानार्थाभासस्य[4] ज्ञानस्य स्फुटाभत्वारम्भः। प्रकर्षस्य पर्यन्तो यदा स्फुटाभत्वमीषदसम्पूर्णं भवति। यावद्धि स्फुटाभत्वमपरिपूर्णं तावत्तस्य प्रकर्षगतिः[5]। सम्पूर्णं तु यदा तदा नास्ति प्रकर्षगतिः। ततः सम्पूर्णावस्थायाः प्राक्तन्यवस्था स्फुटाभत्वप्रकर्षपर्यन्त उच्यते। तस्मात्पर्यन्ताद्यज्ज्ञातं भाव्यमानस्य संनिहितस्येव स्फुटतराकारग्राहि ज्ञानं योगिनः प्रत्यक्षम्। तदिह स्फुटाभत्वारम्भावस्था भावनाप्रकर्षः। अभ्रकव्यवहितमिव यदा भाव्यमानं वस्तु पश्यति सा प्रकर्षपर्यन्तावस्था। करतलामलकवद्भाव्यमानस्यार्थस्य यद्दर्शनं तद्योगिनः प्रत्यक्षम्। तद्धि स्फुटाभम्। स्फुटाभत्वादेव च निर्विकल्पकम्। विकल्पविज्ञानं हि संकेतकालदृष्टत्वेन वस्तु गृह्णच्छब्दसंसर्गयोग्यं गृह्णीयात्। संकेतकालदृष्टत्वं च संकेतकालोत्पन्नज्ञानविषयत्वम्[6]। यथा च पूर्वोत्पन्नं विनष्टं ज्ञानं सम्प्रत्यसत्। तद्वत्पूर्वविनष्टज्ञानविषयत्वमपि सम्प्रति नास्ति वस्तुनः। तदसद्रूपं वस्तुनो गृह्णदसंनिहितार्थग्राहित्वादस्फुटाभम्[7]। अस्फुटाभत्वादेव[8] च सविकल्पकम्। ततः स्फुटाभत्वान्निर्विकल्पकम्। प्रमाणशुद्धार्थग्राहित्वाच्च संवादकम्। अतः प्रत्यक्षम्। इतरप्रत्यक्षवत्। योगः समाधिः। स यस्यास्ति स योगी। तस्य ज्ञानं प्रत्यक्षम्। इति शब्दः परिसमाप्त्यर्थः[9]। इयदेव प्रत्यक्षमिति।

तदेवं प्रत्यक्षस्य कल्पनापोढत्वाभ्रान्तत्वयुक्तस्य प्रकारभेदं प्रतिपाद्य विषयविप्रतिपत्तिं निराकर्तुमाह—

## तस्य विषयः स्वलक्षणम्।

तस्य[10] चतुर्विधप्रत्यक्षस्य विषयो बोद्धव्यः। स्वलक्षणम्। स्वमसाधारणं लक्षणं तत्त्वं स्वलक्षणम्। वस्तुनो ह्यसाधारणं च तत्त्वमस्ति सामान्यं च।

---

१ चत्वार्यार्यसत्यानि दुःखसमुदयनिरोधमार्गसंज्ञकानि। २ विनिवेशनं स्थापनम्। ३ 'भावनायाः' इत्यस्य स्थाने ख० पुस्तकस्य 'भावनयो' इति पाठोऽशुद्धः प्रतीयते। ४ आभासस्य, ख० अवभासस्य। ५ गतिः, ख० गमनम्। ६ यस्मिन् काले संकेत उत्पद्यते तस्मिन्नेव काले तस्य ज्ञानविषयत्वं संकेतकालोत्पन्नज्ञानविषयत्वम्। ७ 'अर्थ' इति पाठः ख० पुस्तके न विद्यते। ८ 'एव च' इति पाठः ख० पुस्तक एवोपलभ्यते। ९ परिसमाप्त्यर्थः, ख० परिसमाप्तिवचनम्। १० चतुर्विध०, ख० चतुर्विधस्य।

यदसाधारणं तत्प्रत्यक्षग्राह्यम् । द्विविधो हि प्रमाणस्य[1] विषयो ग्राह्यश्च यदाकारमुत्पद्यते । प्रापणीयश्च यमध्यवस्यति[2] । अन्यो हि ग्राह्योऽन्यश्चाध्यवसेयः[3] । प्रत्यक्षस्य हि क्षण एको ग्राह्यः । अध्यवसेयस्तु[4] प्रत्यक्षबलोत्पन्नेन निश्चयेन संतान एव । संतान[5] एव च प्रत्यक्षस्य प्रापणीयः । क्षणस्य प्रापयितुमशक्यत्वात्[6] । तथानुमानमपि स्वप्रतिभासेऽनर्थेऽनर्थाध्यवसायेन[7] प्रवृत्तेरनर्थग्राहि । स पुनरारोपितोऽर्थो गृह्यमाणः स्वलक्षणत्वेनावसीयते यतस्ततः स्वलक्षणमध्यवसितं प्रवृत्तिविषयोऽनुमानस्य । अनर्थस्तु ग्राह्यः । तदत्र प्रमाणस्य ग्राह्यं विषयं दर्शयता प्रत्यक्षस्य स्वलक्षणं विषय उक्तः ।

कः पुनरसौ विषयो ज्ञानस्य यः स्वलक्षणं प्रतिपत्तव्य[8] इत्याह—

## यस्यार्थस्य संनिधानासंनिधानाभ्यां ज्ञानप्रतिभासभेदस्तत्स्वलक्षणम् ।

अर्थशब्दो विषयपर्यायः । यस्य ज्ञानविषयस्य । सन्निधानं निकटदेशावस्थानम् । असन्निधानं दूरदेशावस्थानम् । तस्मात्सन्निधानादसन्निधानाच्च ज्ञानप्रतिभासस्य ग्राह्याकारस्य भेदः स्फुटत्वास्फुटत्वाभ्याम् । यो हि ज्ञानस्य[9] विषयः सन्निहितः[10] सन्स्फुटमाभासं ज्ञानस्य करोति । असन्निहितस्तु योग्यदेशावस्थित एवास्फुटं करोति तत्स्वलक्षणम् । सर्वाण्येव हि वस्तूनि दूरादस्फुटानि दृश्यन्ते । समीपे स्फुटानि । तान्येव स्वलक्षणानि ।

---

१ प्रमाणस्य विषयः, ख० विषयः प्रमाणस्य । २ अध्यवस्यति ज्ञास्यतीत्यर्थः । ३ बौद्धनये विज्ञानमर्थजनितमर्थाकारमर्थस्य ग्राहकम् । तदुत्पत्तिमन्तरेण विषयं प्रति नियमायोगात् । घटज्ञानं घटादेवोत्पद्यत इत्यर्थः । जनितत्वं विज्ञानस्य प्रमाणस्य वा । प्रमाणस्य ग्राह्यो विषय एव तस्यार्थाकारत्वम् । तस्य प्रापणीयो विषय एव तस्यार्थग्राहकत्वम् । ४ अध्यवसेयोऽर्थः । ५ बौद्धमते यत्सत्तत्सर्वं क्षणिकम् । यदेकस्मिन् क्षणे विद्यते तद्द्वितीये क्षणे विनश्यते । जीवस्य विषयेऽपि त इत्थमेव प्राहुः । एकस्मिन् प्राणिन्येकस्मिन्क्षणे यो जीवो विद्यते स क्षणान्तरमेव विनश्यते । द्वितीयक्षणे तस्य सन्तानमात्रमवशिष्यते । आदानप्रदानादीनां स्मृतिरूपव्यवहारस्तु संस्काराज्जायते । ६ न कोऽपि प्रत्यक्षेण क्षणं प्रापयितुं शक्यः । तस्यात्यन्तसूक्ष्मत्वात् । अत एवाविद्याप्रत्ययेन पूर्ववदिवावभासयन्सन्तान एव प्रत्यक्षस्य प्रापणीयः । ७ अनर्थाध्यवसायेन, ख० अर्थाध्यवसायेन । ८ ज्ञातव्यः । ९ ज्ञानस्य, ख० ज्ञान० । १० सन्, ख० स ।

कस्मात्पुनः प्रत्यक्षविषय एव स्वलक्षणम् । तथा हि विकल्पविषयोपि बहिर्दृश्यात्मक एवावसीयत इत्याह—

## तदेव परमार्थसत् ।

परमार्थोऽकृत्रिममनारोपितं रूपम् । तेनास्तीति परमार्थसत् । य एवार्थः सन्निधानासन्निधानाभ्यां स्फुटमस्फुटं च प्रतिभासं करोति परमार्थसन्स एव । स एव च प्रत्यक्षविषयो यतस्तस्मात्तदेव स्वलक्षणम् ।

कस्मात्पुनस्तदेव परमार्थसदित्याह—

## अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः ।

अर्थ्यत इत्यर्थः । हेय उपादेयश्च । हेयो हि हातुमिष्यत उपादेयश्चोपादातुम् । अर्थस्य प्रयोजनस्य क्रिया निष्पत्तिस्तस्यां सामर्थ्यं शक्तिस्तदेव लक्षणं रूपं यस्य वस्तुनस्तदर्थक्रियासामर्थ्यलक्षणम् । तस्य भावः । तस्माद्वस्तु शब्दः परमार्थसत्पर्यायः । तदयमर्थो यस्मादर्थक्रियासमर्थं परमार्थसदुच्यते सन्निधानासन्निधानाभ्यां च ज्ञानप्रतिभासस्य भेदकोऽर्थोऽर्थक्रियासमर्थः । तस्मात्स एव परमार्थसत् । तत एव हि प्रत्यक्षविषयादर्थक्रिया प्राप्यते । न विकल्पविषयात् । अत एव यद्यपि विकल्पविषयो दृश्य इवावसीयते तथापि न दृश्य एव । ततोऽर्थक्रियाभावात् । दृश्याच्च भावात् । अतस्तदेव स्वलक्षणं न विकल्पविषयम् ।

## अन्यत्सामान्यलक्षणम् ।

एतस्मात्स्वलक्षणाद्यदन्यत्स्वलक्षणं यो न भवति ज्ञानविषयस्तत्सामान्यलक्षणम् । विकल्पविज्ञानेनावसीयमानो ह्यर्थः सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासं न भिनत्ति । तथा ह्यारोप्यमाणो वह्निरारोपादस्ति । आरोपाच्चदूरस्थो निकटस्थश्च । तस्य समारोपितस्य सन्निधानादसन्निधानाच्च ज्ञानप्रतिभासस्य न भेदः स्फुटत्वेनास्फुटत्वेन वा । ततः स्वलक्षणादन्य उच्यते । सामान्येन लक्षणं सामान्यलक्षणम् । साधारणं रूप-

---

१ निश्चीयते । २ 'एव' इति पदं ख० पुस्तक एवोपलभ्यते । ३ यदेवार्थक्रियाकारी तदेव परमार्थसत् । नित्यं नार्थक्रियाकारी तस्म तत्परमार्थसत् । ४ तत्सामान्यलक्षणम्, ख० तस्मात्सामान्यलक्षणम् । ५ नीश्चीयमानः ।

मित्यर्थः । समारोप्यमाणं हि रूपं सकलवह्निसाधारणम् । ततस्तत्सामान्यलक्षणम्[1] ।

तच्चानुमानस्य ग्राह्यं दर्शयितुमाह—

**सोऽनुमानस्य विषयः ।**

सोऽनुमानस्य विषयो ग्राह्यरूपः । सर्वनाम्नोऽभिधेयवह्निलिङ्गपरिग्रहः । सामान्यलक्षणम् । अनुमानस्य विषयं व्याख्यातुकामेनायं स्वलक्षणस्वरूपाख्यानग्रन्थ आवर्त्तनीयः[2] स्यात् । ततो लाघवार्थं प्रत्यक्षपरिच्छेद एवानुमानविषय उक्तः ।

विषयविप्रतिपत्तिं निराकृत्य फलविप्रतिपत्तिं निराकर्तुमाह—

**तदेव च प्रत्यक्षं ज्ञानं प्रमाणफलमर्थप्रतीतिरूपत्वात् ।**

यदेवानन्तरमुक्तं प्रत्यक्षं तदेव प्रमाणस्य फलम् । कथं प्रमाणफलमित्याह । अर्थस्य प्रतीतिरवगमः[3] । सैव रूपं यस्य प्रत्यक्षज्ञानस्य तदर्थप्रतीतिरूपम् । तस्य भावः । तस्मादेतदुक्तं भवति । प्रापकं ज्ञानं प्रमाणं । प्रापणशक्तिश्च न केवलादर्थाविनाभावित्वाद्भवति । बीजाद्यविनाभाविनोऽप्यङ्कुरादेरप्रापकत्वात् । तस्मादर्थादुत्पत्तावप्यस्य[4] ज्ञानस्यास्ति कश्चिदवश्यकर्त्तव्यः प्रापकव्यापारः । येन कृतेनार्थः प्रापितो भवति । स एव च प्रमाणफलम् । यदनुष्ठानात्प्रापकं भवति ज्ञानम् । उक्तं च पुरस्तात्प्रवृत्तिविषयप्रदर्शनमेव प्रापकस्य प्रापकव्यापारो नाम । तदेव च प्रत्यक्षमर्थप्रतीतिरूपमर्थदर्शनरूपम्[5] । अतस्तदेव प्रमाणफलम् ।

यदि तर्हि ज्ञानं प्रमितिरूपत्वात्प्रमाणफलं किं तर्हि प्रमाणमित्याह—

**अर्थसारूप्यमस्य प्रमाणं ।**

अर्थेन सह यत्सारूप्यं सादृश्यमस्य[6] ज्ञानस्य तत्प्रमाणमिह । यस्माद्विषयाज्ज्ञानमुदेति[7][8] तद्विषयसदृशं तद्भवति । यथा नीलादुत्पद्यमानं नीलसदृशम् । तच्च सारूप्यं[9] सादृश्यमाकार इत्याभास इत्यपि व्यपदिश्यते[10] ।

---

१ ततस्तत्सामान्यलक्षणम् , ख० ततस्तस्मात्सामान्यलक्षणम् । २ पुनः कथनीय स्यात् । ३ अवगमो ज्ञानम् । ४ अर्थात्, ख० प्राथादर्थात् । ५ अर्थदर्शन०, ख० अर्थप्रदर्शन० । ६ सादृश्यम् , ख० यत्सादृश्यम् । ७ ज्ञानं, ख० विज्ञानम् ८ विज्ञानमर्थजनितमर्थाकारमर्थस्य च ग्राहकमिति यदुक्तं पुरस्तादस्माभिः ९ 'सारूप्यम्' इति पदं ख० पुस्तक एवोपलभ्यते । १० कथ्यते ।

ननु च ज्ञानादव्यतिरिक्तं सादृश्यम् । तथा च सति तदेव ज्ञानं प्रमाणम् । तदेव प्रमाणफलम् । न चैकं वस्तु साध्यं साधनं चोपपद्यते । तत्कथं सारूप्यप्रमाणमित्याह—

## तद्वशादर्थप्रतीतिसिद्धेरिति ।

तदिति सारूप्यं तस्य वशात्सारूप्यसामर्थ्यात् । अर्थस्य प्रतीतिरवबोधस्तस्याः सिद्धिः । तत्सिद्धेः[1] कारणात् । अर्थस्य प्रतीतिरूपं प्रत्यक्षं विज्ञानं सारूप्यवशात्सिध्यति प्रतीतं भवतीत्यर्थः । नीलनिर्भासं हि विज्ञानं यतस्तस्मान्नीलस्य प्रतीतिरवसीयते । येभ्यो हि चक्षुरादिभ्यो विज्ञान[2]मुत्पद्यते न तद्वशात्तज्ज्ञानं नीलस्य संवेदनं शक्यतेऽवस्थापयितुम् । नीलसदृशं त्वनुभूयमानं नीलस्य संवेदनमवस्थाप्यते । न चात्र जन्यजनकभावनिबन्धनः साध्यसाधनभावः येनैकस्मिन्वस्तुनि विरोधः स्यात्[3] । अपि तु व्यवस्थाप्यव्यवस्थापकभावेन । तत एकस्य वस्तुनः किंचिद्रूपं प्रमाणं किंचित्प्रमाणफलं न विरुध्यते । व्यवस्थापनहेतुर्हि सारूप्यम् । तस्य ज्ञानस्य व्यवस्थाप्यं च नीलसंवेदनरूपम् । व्यवस्थाप्यव्यवस्थापकभावोऽपि कथमेकस्य ज्ञानस्येति[4] चेदुच्यते । सदृशमनुभूयमानं तद्विज्ञानम् । यतो नीलस्य ग्राहकमवस्थाप्यते निश्चयप्रत्ययेन । तस्मात्सारूप्यमनुभूतं व्यवस्थापनहेतुः । निश्चयप्रत्ययेन च तज्ज्ञानं नीलसंवेदनमवस्थाप्यमानं व्यवस्थाप्यम् । तस्मादसारूप्यव्यावृत्त्या सारूप्यं ज्ञानस्य व्यवस्थापनहेतुः । अनीलबोधव्यावृत्त्या च नीलबोधरूपत्वं व्यवस्थाप्यम् । व्यवस्थापकश्च विकल्पप्रत्ययः प्रत्यक्षबलोत्पन्नो द्रष्टव्यः ।

ननु निर्विकल्पकत्वात्प्रत्यक्षमेव नीलबोधरूपत्वेनात्मानमवस्थापयितुं शक्नोति । निश्चयप्रत्ययेनाव्यवस्थापितं सदपि नीलबोधरूपं विज्ञानमसत्कल्पमेव । तस्मान्निश्चयेन नीलबोधरूपं व्यवस्थापितं विज्ञानं नीलबोधात्मना सद्भवति । तस्मादध्यवसायं कुर्वदेव प्रत्यक्षं प्रमाणं भवति ।

---

१ तत्सिद्धेः, ख० ततः सिद्धेः । २ विज्ञानम्, ख० ज्ञानम् । ३ यत्र स्वेकस्मिन्नेव वस्तुनि जन्यजनकभावनिबन्धनः साध्यसाधनभावो भवति तत्र विरोध आपद्यते । अत्र तु व्यवस्थाप्यव्यवस्थापकभावोऽस्ति । अत एवात्र न कश्चिद्विरोधः । ४ 'इति' इति पदं ख० पुस्तक एवोपलभ्यते ।

अकृते त्वध्यवसाये नीलबोधरूपत्वेनाव्यवस्थापितं भवति विज्ञानम् । तथा च प्रमाणफलमर्थाधिगमरूपत्वमनिष्पन्नम् । अतः साधकतमत्वाभावात्प्रमाणमेव न स्याज्ज्ञानम् । जनितेन त्वध्यवसायेन सारूप्यवशान्नीलबोधरूपे[1] ज्ञानेऽवस्थाप्यमाने[2] सारूप्यं व्यवस्थापनहेतुत्वात्प्रमाणं सिद्धं भवति । यद्येवमध्यवसायसहितमेव प्रत्यक्षं प्रमाणं स्यान्न केवलमिति चेत् । नैतदेवम् । यस्मात्प्रत्यक्षबलोत्पन्नेनाध्यवसायेन दृष्टत्वेनाऽर्थोऽवसीयते नोत्प्रेक्षितत्वेन । दर्शनं[3] चार्थसाक्षात्करणाख्यं प्रत्यक्षव्यापारः । उत्प्रेक्षणं तु[4] विकल्पव्यापारः । तथा हि परोक्षमर्थं विकल्पयन्त उत्प्रेक्षामहे न तु पश्याम इत्युत्प्रेक्षात्मकं विकल्पव्यापारमनुभवादवस्यन्ति[5] । तस्मात्स्वव्यापारं तिरस्कृत्य प्रत्यक्षव्यापारमादर्शयति । यत्रार्थे प्रत्यक्षपूर्वकोऽध्यवसायस्तत्र प्रत्यक्षं केवलमेव प्रमाणम् ॥

इति न्यायबिन्दुटीकायां प्रथमः परिच्छेदः समाप्तः ॥[6]

---

१ रूपत्वं, ख० रूपम् । २ अवस्थाप्यमाने, ख० व्यवस्थाप्यमाने । ३ दर्शनं, ख० अदर्शनं ( ० त्वेनादर्शनं ) । ४ 'तु' इति पाठो ख० पुस्तके नैवोपलभ्यते । ५ अवस्यन्ति, ख० अध्यवस्यन्ति । ६ 'मङ्गलमस्तु' इत्यधिको पाठो विद्यते क० पुस्तके । ख० 'इति आचार्यधर्मोत्तरविरचितायां न्यायबिन्दुटीकायां प्रथमः प्रत्यक्षपरिच्छेदः ।'

# अथ द्वितीयपरिच्छेदः ।

एवं प्रत्यक्षं व्याख्यायानुमानं व्याख्यातुमाह[1]—

## अनुमानं द्विधा ।

द्विप्रकारकम् । अथानुमानलक्षणे वक्तव्ये किमस्मात्प्रकारभेदः कथ्यते । उच्यते । परार्थानुमानं शब्दात्मकं स्वार्थानुमानं तु ज्ञानात्मकम् । तयोरत्यन्तभेदान्नैकं लक्षणमस्ति । ततस्तयोः प्रतिनियतं लक्षणमाख्यातुं प्रकारभेदः कथ्यते । प्रकारभेदो हि व्यक्तिभेदः । व्यक्तिभेदे च कथिते प्रतिव्यक्तिनियतं लक्षणं शक्यते वक्तुम् । नान्यथा । ततो लक्षणनिर्देशाङ्गमेव प्रकारभेदकथनम् । अशक्यतां च प्रकारभेदकथनमन्तरेण लक्षणनिर्देशस्य ज्ञात्वा प्राक्प्रकारभेदः कथ्यत इति ।

किं पुनस्तद्द्वैविध्यमित्याह—

## स्वार्थं परार्थं च ।

स्वस्मादिदं स्वार्थम् । येन स्वयं प्रतिपद्यते तत्स्वार्थम् । परस्मादिदं परार्थम् । येन परं प्रतिपादयति तत्परार्थम् ।

## तत्र स्वार्थं त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमानम् ।

तत्र तयोः स्वार्थपरार्थानुमानयोर्मध्ये स्वार्थं ज्ञानं किंविशिष्टमित्याह—त्रिरूपादिति । त्रीणि रूपाणि यस्य वक्ष्यमाणलक्षणानि तत्त्रिरूपम् । लिङ्ग्यते गम्यतेऽनेनार्थ इति लिङ्गम् । तस्मात्त्रिरूपाल्लिङ्गाद्यज्जातं ज्ञानमिति । एतद्धेतुद्वारेण विशेषणम् । तत्त्रिरूपाच्च लिङ्गात्त्रिरूपालिङ्गालम्बनमप्युत्पद्यत इति विशिनष्टि । अनुमेय इति । एतच्च विषयद्वारेण विशेषणम् । त्रिरूपाल्लिङ्गाद्यदुत्पन्नमनुमेयालम्बनं ज्ञानं तत्स्वार्थमनुमानमिति ।

लक्षणविप्रतिपत्तिं निराकृत्य फलविप्रतिपत्तिं निराकर्तुमाह—

## प्रमाणफलव्यवस्थात्रापि प्रत्यक्षवत् ।

प्रमाणस्य यत्फलं तस्य या व्यवस्थात्रानुमानेऽपि प्रत्यक्षवत्प्रत्यक्ष इव

---

१ व्याख्यातुकामः । २ विभिन्नत्वात् । ३ निश्चितम् । ४ कथयितुम् । ५ निर्देशार्थमेव । ६ प्रत्यक्षवत्प्रत्यक्ष इव । लिखितपुस्तकयोः प्रत्यक्ष इव प्रत्यक्षवत् । सम्भवतोऽनावश्यकतयायं पाठः न संस्कृतः ।

वेदितव्या। यथा हि नीलसरूपं प्रत्यक्षमनुभूयमानं नीलबोधरूपमवस्थाप्यते। तेन नीलसारूप्यं व्यवस्थापनहेतुः प्रमाणम्। नीलबोधरूपं तु व्यवस्थाप्यमानं प्रमाणफलम्। तद्वदनुमानं नीलाकारमुत्पद्यमानं नीलबोधरूपमवस्थाप्यते। तेन नीलसारूप्यमस्य प्रमाणम्। नीलविकल्पनरूपं त्वस्य[1] प्रमाणफलम्। सारूप्यवशाद्धि तन्नीलप्रतीतिरूपं सिध्यति। नान्यथेति। एवमिह संख्यालक्षणफलविप्रतिपत्तयः। प्रत्यक्षपरिच्छेदे तु गोचरविप्रतिपत्तिर्निराकृता।

लक्षणनिर्देशप्रसङ्गेन तु त्रिरूपं लिङ्गं प्रस्तुतम्। तदेव व्याख्यातुमाह—

## त्रैरूप्यम् पुनः[2]

लिङ्गस्य यत्त्रैरूप्यं यानि त्रीणि रूपाणि तदिदमुच्यत इति शेषः।

किं पुनस्तत्[3]त्रैरूप्यमित्याह—

## लिङ्गस्यानुमेये सत्त्वमेव।

अनुमेयं वक्ष्यमाणलक्षणम्। तस्मिंल्लिङ्गस्य सत्त्वमेव निश्चितमेकं [illegible] त्तम्। यथा बीजमङ्कुरस्य। अदृष्टाद्धूमादग्नेरप्रतिपत्तेः। नापि स्वविषयज्ञानापेक्षं परोक्षार्थप्रकाशनम्। यथा प्रदीपो घटादेः। दृष्टादप्यनिश्चितसम्बन्धादप्रतिपत्तेः। तस्मात्परोक्षार्थनान्तरीयकतया निश्चयनमेव लिङ्गस्य परोक्षार्थप्रतिपादनव्यापारः। नापरः कश्चित्। अतोऽन्वयव्यतिरेकपक्षधर्मत्वनिश्चयो लिङ्गव्यापारात्मकत्वादवश्यकर्त्तव्य इति सर्वेषु रूपेषु निश्चितग्रहणमपेक्षणीयम्। तत्र सत्त्ववचनेनासिद्धं चाक्षुषत्वादि निरस्तम्[4]। एवकारेण पक्षैकदेशासिद्धः निरस्तो हेतुः[5]। यथा चेतनास्तरवः स्वापादिति। पक्षीकृतेषु तरुषु पत्रसंकोचलक्षणः स्वाप एकदेशेन सिद्धः। न हि सर्वे वृक्षा रात्रौ पत्रसंकोचभाजः। किं तु केचिदेव। सत्ववचनस्य पश्चात्कृते-

१ पदमिदं ख० पुस्तके न विद्यते। २ यद्यपि सूत्रमिदमपरिपूर्णमिवावलोक्यते, तथापि नात्र द्वितीयं सूत्रं स्थापयितुं शक्नुमस्तावन्मात्रस्यैव त्रैरूप्यस्वाभावात्। ३ 'तत्' इति पदं क० पुस्तके नैवोपलभ्यते। ४ निरस्तम्, ख० निषिद्धम्। ५ 'निरस्तो हेतुः' इति पाठः ख० पुस्तक एव विद्यते।

नैवकारेणासाधारणो धर्मो निरस्तः। यदि ह्यनुमेय एव सत्त्वमिति कुर्या[1]-च्छ्रावणत्वमेव हेतुः स्यात्। निश्चितग्रहणेन संदिग्धासिद्धः सर्वो निरस्तः।

## सपक्ष एव सत्त्वम्।

सपक्षो वक्ष्यमाणलक्षणः। तस्मिन्नेव सत्त्वं निश्चितं द्वितीयं रूपम्। इहापि सत्त्वग्रहणेन विरुद्धो निरस्तः। स[2] हि नास्ति सपक्षे। एवकारेण साधारणानैकान्तिकः। अनित्यः शब्दः प्रमेयत्वा[3]त्। स[4] हि न सपक्ष एव वर्तते किं तूभयत्रा[5]पि। सत्त्वग्रहणात्पूर्वावधारणवचनेन सपक्षव्या[6]पि-सत्ताकस्यापि प्रयत्नानन्तरीयकस्य हेतुत्त्वं कथितम्। पश्चादवधारणे त्व[7]यमर्थः स्यात्। सपक्षे सत्त्वमेव यस्य स हेतुरिति प्रयत्नानन्तरीयकत्वं न हेतुः स्यात्। निश्चित[8]वचनेन संदिग्धान्वयोऽनैकान्तिको निरस्तः। यथा सर्वज्ञः[9] कश्चिद्वक्तृत्वात्। वक्तृत्वं हि सपक्षे सर्वज्ञे संदिग्धम्।

## असपक्षे चासत्त्वमेव निश्चितम्।

असपक्षो वक्ष्यमाणलक्षणः। तस्मिन्नसत्त्वमेव निश्चितं तृतीयं रूपम्। तत्रासत्त्वग्रहणेन विरुद्धस्य निरासः। विरुद्धो हि विपक्षेऽस्ति। एवकारेण साधारणस्य विपक्षैकदेशवृत्तेर्निरासः। नित्य[10]: शब्दः कृतकत्वात् खवत्[11]। प्रयत्नानन्तरीयकत्वे साध्ये ह्यनित्यत्वं विपक्षैकदेशे विद्युदादावस्त्याकाशादौ नास्ति। ततो नियमेनास्य निरासः। [12]असत्त्ववचनात्पूर्वस्मिन्नवधारणेऽ-यमर्थः स्यात्। विपक्ष एव यो नास्ति स हेतुः। तथा च प्रयत्नानन्तरीयकत्वं सपक्षेऽपि[13] सर्वत्र नास्ति। ततो न हेतुः स्यात्। ततः पूर्वं न कृतम्। निश्चितग्रहणेन संदिग्धविपक्षव्यावृत्तिकोऽनैकान्तिको निरस्तः।

---

१ कुर्यात्, ख० ब्रूयात्। २ विरुद्धः। ३ वाक्यमिदं ख० पुस्तक एवोप लभ्यते। ४ साधारणानैकान्तिकः। ५ पक्षे सपक्षे च। ६ क० पुस्तके 'सपक्षव्यापिसत्ताकस्य' इत्यस्य स्थाने 'सपक्षऽव्यापिसत्ताकस्य' इति पाठो विद्यते। यच्च मुद्रितपुस्तकस्य सम्पादकस्य सम्मतौ 'सपक्ष' इत्यस्य 'सपक्षा' इति संस्कृतरूपोऽस्ति। अस्माकं सम्मतौ तु 'ऽ'इति चिह्नोऽसावधानतयैव केनचिल्लेखकेन प्रयुक्तः। ७ तु. क० हि। ८ निश्चितवचनेन, क० निश्चयवचनेन। ९ यद्यप्यमरकोशे 'सर्वज्ञस्सुगतो बुद्धो' इत्येवमादि लिखितमस्ति, तथापि प्रत्यक्षानुमानप्रमाणवादिनस्ते बौद्धाः न कश्चित्सर्वज्ञमामनन्ति। १० वाक्यमिदं ख० पुस्तक एवोपलभ्यते। ११ आकाशवत्। १२ असत्त्ववचनात, ख० असत्त्वशब्दात्। १३ इदं पदं ख० पुस्तकेनैवोपलभ्यते।

ननु च सपक्ष एव सत्त्वमित्युक्ते विपक्षेऽसत्त्वमेवेति गम्यत एव । तत्किमर्थं पुनरुभयोरुपादानं कृतम् । तदुच्यते । अन्वयो व्यतिरेको वा नियमवानेव प्रयोक्तव्यो नान्यथेति दर्शयितुं द्वयोरप्युपादानं कृतम् । अनियमे हि द्वयोरपि प्रयोगेऽयमर्थः स्यात् । सपक्षे योऽस्ति विपक्षे च नास्ति स हेतुरिति । तथा च सति स श्यामस्तत्पुत्रत्वाद्दृश्यमानपुत्रवदिति तत्पुत्रत्वं हेतुः स्यात् । तस्मान्नियमवतोरेवान्वयव्यतिरेकयोः प्रयोगः कर्त्तव्यः । येन प्रतिबन्धो गम्येत साधनस्य साध्येन । नियमवतोश्च प्रयोगेऽवश्यकर्त्तव्ये द्वयोरेक एव प्रयोक्तव्यो न द्वाविति नियमवानेवान्वयो व्यतिरेको वा प्रयोक्तव्य इति शिक्षणार्थं द्वयोरुपादानमिति ।

त्रैरूप्यकथनप्रसङ्गेनानुमेयः सपक्षो विपक्षश्चोक्तः । तेषां लक्षणं वक्तव्यम्, तत्र कोऽनुमेय इत्याह—

## अनुमेयोऽत्र जिज्ञासितविशेषो धर्मी ।

अत्र हेतुलक्षणे निश्चेतव्ये धर्म्यनुमेयः । अन्यत्र तु साध्यप्रतिपत्तिकाले समुदायोऽनुमेयः । व्याप्तिनिश्चयकाले तु धर्मोऽनुमेय इति दर्शयितुमत्रग्रहणम् । जिज्ञासितो ज्ञातुमिष्टो विशेषो धर्मो यस्य धर्मिणः स तथोक्तः ।

कः सपक्षः—

## साध्यधर्मसामान्येन समानोऽर्थः सपक्षः ।

समानोऽर्थः सपक्षः । समानः सदृशो योऽर्थः पक्षेण स सपक्ष उक्त उपचारात् । समानशब्देन विशेष्यते । समानः पक्षः सपक्षः । समानस्य च सशब्दादेशः । स्यादेतत् । किं तत्पक्षसपक्षयोः सामान्यं[10] येन समानः सपक्षः पक्षेणेत्याह । साध्यधर्मसामान्येनेति । साध्यश्चा-

---

१ तदुच्यते, ख० उच्यते । २ 'अपि' इति पदं ख० पुस्तके नैवोपलभ्यते । ३ अनियमे, ख० अनियते । ४ प्रयोक्तव्यः, क० कर्तव्यः । ५ स्वार्थानुमानलक्षणे । ६ 'पर्वतोऽयमग्निमान्धूमवत्त्वात्' इत्यस्मिन्ननुमाने धूमलक्षणोधर्मी वह्निरनुमेयः साध्यत्वात् । ७ 'शब्दो नित्यः कृतकत्वात्' इत्यस्मिन्ननुमाने शब्दे नित्यत्वं साध्यते । अत एवात्र 'शब्दो नित्यः' इति समुदायोऽनुमेयः साध्यत्वात् । ८ 'यत्र यत्र धूमस्तत्र तत्र वह्निः, यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति' इति व्याप्तौ धूमसद्भावेऽग्निसद्भावो साध्यः । धूमोऽत्र वह्नेर्धर्मोऽस्ति । स एवात्र साध्यः । अत एव व्याप्तिनिश्चयकाले धर्मोऽनुमेयः । ९ इदं पदं क० पुस्तके न विद्यते । १० सामान्यम्, ख० साम्यम् ।

सावसिद्धत्वाद्धर्मश्च पराश्रितत्वात्साध्यधर्मः । न च विशेषः साध्यः । अपि तु सामान्यम् । अत इह सामान्यं साध्यमुक्तम् । साध्यधर्मश्चासौ सामान्यं चेति साध्यधर्मसामान्येन समानः पक्षेण सपक्ष इत्यर्थः ।

कोऽसपक्ष इत्याह—

## न सपक्षोऽसपक्षः ।

न सपक्षोऽसपक्षः । सपक्षो यो न भवति सोऽसपक्षः

कश्च सपक्षो न भवति—

## ततोऽन्यस्तद्विरुद्धस्तदभावश्चेति ।

ततः सपक्षादन्यः । तेन च[1] विरुद्धः । तस्य च सपक्षस्याभावः । सपक्षादन्यत्वं तद्विरुद्धत्वं[2] च न तावत्प्रत्येतुं शक्यं यावत्सपक्षस्वभावाभावो न विज्ञातः । तस्मादन्यत्वविरुद्धत्वप्रतीतिसामर्थ्यात्सपक्षाभावरूपौ प्रतीतावन्यविरुद्धौ । ततोऽभावः साक्षात्सपक्षाभावरूपः प्रतीयते । अन्यविरुद्धौ तु सामर्थ्यादभावरूपौ प्रतीयेते । ततस्त्रयाणामप्यसपक्षत्वम् ।

## त्रिरूपाणि च ।

उक्तेन त्रैरूप्येण त्रिरूपाणि च त्रीण्येव लिङ्गानीति चकारो वक्तव्यान्तरसमुच्चयार्थः । त्रैरूप्यमादौ पृष्टं त्रिरूपाणि च लिङ्गानि परेण ।

तत्र त्रैरूप्यमुक्तम् । त्रिरूपाणि चोच्यन्ते ।

## त्रीण्येव च लिङ्गानि

त्रीण्येव त्रिरूपाणि लिङ्गानि । त्रयस्त्रिरूपलिङ्गप्रकारा इत्यर्थः ।

कानि पुनस्तानीत्याह —

## अनुपलब्धिः स्वभावकार्ये चेति ।

प्रतिषेध्यस्य साध्यस्यानुपलब्धिस्त्रिरूपा । विधेयस्य साध्यस्य स्वभावस्त्रिरूपः । कार्यं च ।

---

१ 'च' इति पदं ख० पुस्तके न विद्यते । २ तद्विरुद्धत्वं, ख० च विरुद्धत्वम् ।

अनुपलब्धिमुदाहर्तुमाह—

**तत्रानुपलब्धिर्यथा न प्रदेशविशेषे क्वचिद्घट उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति ।**

यथेत्यादि । यथेत्युपप्रदर्शनार्थम् । यथेयमनुपलब्धिस्तथान्यापि । न त्वियमेवेत्यर्थः । प्रदेश एकदेशः । विशिष्यत इति विशेषः प्रतिपत्तृप्रत्यक्षः । तादृशश्च न सर्वः प्रदेशः । तदाह क्वचिदिति । प्रतिपत्तृप्रत्यक्षे क्वचिदेव प्रदेश इति धर्मी । न घट इति साध्यम् । उपलब्धिर्ज्ञानम्[1] । तस्या लक्षणं जनिका सामग्री । तया ह्युपलब्धिर्लक्ष्यते । तत्प्राप्तोऽर्थो जनकत्वेन सामग्र्यन्तर्भावादुपलब्धिलक्षणप्राप्तो दृश्य इत्यर्थः । तस्यानुपलब्धेरित्ययं हेतुः । अथ यो यत्र नास्ति स कथं तत्र दृश्यः । दृश्यत्वसमारोपादसन्नपि दृश्य उच्यते । यश्चैवं संभाव्यते यद्यसावत्र भवेद्दृश्य एव भवेदिति स तत्राविद्यमानोऽपि दृश्यः समारोप्यः । कश्चैवं संभाव्यः । यस्य समग्राणि स्वालम्बनदर्शनकारणानि भवन्ति । कदा च तानि समग्राणि गम्यन्ते । यदैकज्ञानसंसर्गिवस्त्वन्तरोपलम्भः । एकेन्द्रियज्ञानग्राह्यं लोचनादिप्रणिधानाभिमुखं वस्तुद्वयमन्योन्यापेक्षमेकज्ञानसंसर्गि कथ्यते[2] । तयोर्हि सतोर्नैकनियता भवति प्रतिपत्तिः । योग्यताया द्वयोरप्यविशिष्टत्वात् । तस्मादेकज्ञानसंसर्गिणि दृश्यमाने सत्येकस्मिन्नितरत्समग्रदर्शनसामग्रीकं यदि भवेद्दृश्यमेव[3] भवेदिति संभावितं दृश्यमारोप्यते । तस्यानुपलम्भो दृश्यानुपलम्भः । तस्मात्स एव घटविविक्तप्रदेशस्तदालम्बनं[4] च ज्ञानं दृश्यानुपलम्भनिश्चयहेतुत्वाद्दृश्यानुपलम्भ उच्यते । यावद्ध्येकज्ञानसंसर्गि वस्तु न निश्चितं तज्ज्ञानं च[5] न तावद्दृश्यानुपलम्भनिश्चयः । ततो वस्त्वप्यनुपलम्भ उच्यते तज्ज्ञानं च । दर्शननिवृत्तिमात्रं तु स्वयमनिश्चितत्वादगमकम् । ततो[6] दृश्यघटरहितः प्रदेशस्तज्ज्ञानं च वचनसामर्थ्यादेव दृश्यानुपलम्भरूपमुक्तं द्रष्टव्यम् ।

---

१ उपलब्धिर्ज्ञानम् । तस्या लक्षणं जनिका सामग्री, क० उपलब्धिज्ञानं तस्य लक्षणं । जनिका सामग्री । २ कथ्यते, ख० गम्यते । ३ दृश्यं, ख० दृश्यत्वम् । ४ घटविविक्त०, ख० घटादिविविक्त । ५ वस्तु न निश्चितं तज्ज्ञानं च, ख० वस्तु तज्ज्ञानं वा (अशुद्धः) न निश्चितम् । ६ ततो दृश्यघटरहितः, ख० तादृशघटरहितः ।

का पुनरुपलब्धिलक्षणप्राप्तिरित्याह—

## उपलब्धिलक्षणप्राप्तिरुपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च ।

उपलब्धिलक्षणप्राप्तिरुपलब्धिलक्षणप्राप्तत्वं घटस्य । उपलम्भप्रत्ययान्तरसाकल्यमिति । ज्ञानस्य घटोऽपि जनकः । अन्ये च चक्षुरादयः । घटाद्दृश्यादन्ये हेतवः प्रत्ययान्तराणि । तेषां साकल्यं संनिधिः । स्वभाव एव विशिष्यते तदन्यस्मादिति विशेषो विशिष्ट इत्यर्थः । तदयं विशिष्टः स्वभावः प्रत्ययान्तरसाकल्यं चैतद्द्वयमुपलब्धिलक्षणप्राप्तत्वं घटादेर्द्रष्टव्यम् ।

कीदृशः स्वभावविशेष इत्याह—

## यः स्वभावः सत्स्वन्येषूपलम्भप्रत्ययेषु यत्प्रत्यक्ष एव भवति स स्वभावः ।

सत्स्वित्यादि । उपलम्भस्य यानि घटाद्दृश्यात्प्रत्ययान्तराणि तेषु सत्सु विद्यमानेषु यः स्वभावः सन् प्रत्यक्ष एव भवति स स्वभावविशेषः । तदयमत्रार्थः । एकप्रतिपत्त्रपेक्षमिदं प्रत्यक्षलक्षणम् । तथा च सति द्रष्टुं प्रवृत्तस्यैकस्य द्रष्टुर्दृश्यमान उभयवान्भावः । १ । अदृश्यमानास्तु देशकालस्वभावविप्रकृष्टाः स्वभावविशेषरहिताः प्रत्ययान्तरसाकल्यवन्तस्तु । यैर्हि प्रत्ययैः स द्रष्टा पश्यति ते संनिहिताः । अतश्च[2] संनिहिताय द्रष्टुं प्रवृत्तः सः । २ । द्रष्टुमप्रवृत्तस्य तु योग्यदेशास्था अपि द्रष्टुं ते न शक्याः। प्रत्ययान्तरवैकल्यवन्तः स्वभावविशेषयुक्तास्तु । ३ । दूरदेशकालास्तूभयविकलाः । ४ । तदेवं पश्यतः कस्यचिन्न प्रत्ययान्तरविकलो नाम[3] । १ । स्वभावविशेषविकलस्तु भवेत् । २ । अपश्यतस्तु शक्यो द्रष्टुं योग्यदेशस्थः प्रत्ययान्तरविकलः । ३ । अन्ये तूभयविकला इति । ४[4] ।

---

१ उपलम्भप्रत्ययान्तरसाकल्यस्वभावविशेषवान् । २ क० पुस्तकस्य 'आतश्च' इति पाठोऽशुद्धः प्रतीयते । ख० अतश्च सन्निहिता यद्द्रष्टुं प्रवृत्ताः (अशुद्धः) स । ३ पश्यतः कस्यचित् पुरुषस्य न प्रत्ययान्तरविकलत्वं भवति । ४ ख० पुस्तकेऽङ्का न विद्यन्ते ।

अनुपलब्धिमुदाहृत्य स्वभावमुदाहर्तुमाह—

**स्वभावः स्वसत्तामात्रभाविनि साध्यधर्मे हेतुः ।**

स्वभावो हेतुरिति सम्बन्धः । कीदृशो हेतुः साध्यस्यैव[1] स्वभाव इत्याह । स्वस्यात्मनः सत्ता सैव केवला स्वसत्तामात्रम् । तस्मिन् सति भवितुं शीलं यस्येति । यो हेतोरात्मनः सत्तामपेक्ष्य विद्यमानो भवति न तु हेतुसत्ताया व्यतिरिक्तं कञ्चिद्धेतुमपेक्षते स[2] स्वसत्तामात्रभावी साध्यः । तस्मिन् साध्ये यो हेतुः स स्वभावः । तस्य साध्यस्य नान्यः ।

उदाहरणम्—

**यथा वृक्षोऽयं शिंशपात्वादिति ।**

अयमिति धर्मी । वृक्ष इति साध्यम् । शिंशपात्वादिति[3] हेतुः । तदयमर्थो वृक्षव्यवहारयोग्योऽयं शिंशपाव्यवहारयोग्यत्वादिति । तत्र प्रचुरशिंशपे देशेऽविदितशिंशपाव्यवहारो जडो यदा[4] केनचिदुच्चां शिंशपामुपादर्श्योच्यते[5] अयं वृक्ष इति तदासौ जाड्याच्छिंशपाया उच्चत्वमपि वृक्षव्यवहारनिमित्तमवस्यति[6] । तदा यामेवानुच्चां शिंशपां[7] पश्यति तामेवावृक्षमवस्यति[8] । स मूढः[9] शिंशपात्वमात्रनिमित्ते वृक्षव्यवहारे प्रवर्त्यते । नोच्चत्वादि निमित्तान्तरमिह वृक्षव्यवहारस्य । अपि तु शिंशपात्वमात्रं निमित्तं शिंशपागतशाखादिमत्त्वं निमित्तमित्यर्थः ।

कार्यमुदाहर्तुमाह—

**कार्यं यथाग्निरत्र धूमादिति ।**

[10]अग्निरिति साध्यम् । अत्रेति धर्मी । धूमादिति हेतुः । कार्यकारणभावो लोके [11]प्रत्यक्षानुपलम्भनिबन्धनः प्रतीत इति न स्वभावस्येव कार्यस्य लक्षणमुक्तम् ।

---

१ साध्यस्यैव स्वभाव, ख० साध्यस्य भावः । २ इदं पदं क० पुस्तके नैवोपलभ्यते । ३ शिंशप०, क० प्रथमस्थाने 'सिसप' द्वितीयस्थाने च 'शिंशप' इति लिखति । द्वितीयपंक्तावप्यिदमेव, 'प्रचुरसिसपे' किन्तु 'अविदितशिंशपा० ।' ४ यदा, ख० यथा । ५ उपादर्श्य, ख० उपदर्श्य । ६ वृक्षव्यवहारनिमित्तं, ख० वृक्षव्यवहारस्य निमित्तम् । ७ शिंशपां पश्यति, ख० पश्यति शिंशपाम् । ८ अवृक्षं, क० अवृक्षत्वम् । ९ ख० पुस्तके 'स मूढः' इत्यस्यानन्तरं '।'इति विरामः प्रयुक्तः । १० अग्निरिति, क० वह्निरिति । ११ प्रत्यक्षानुपलम्भनिबन्धनः, ख० प्रत्यक्षानुपलम्भः निबन्धनम् ।

ननु त्रिरूपत्वादेकमेव लिङ्गमयुक्तम्[1]। अथ प्रकारभेदाद्भेदः । एवं सति स्वभावहेतोरेकस्यानन्तप्रकारत्वात्त्रित्वमयुक्तमित्याह—

**अत्र द्वौ वस्तुसाधनौ ।**

अत्रेति एषु[2] त्रिषु हेतुषु मध्ये द्वौ हेतू वस्तुसाधनौ विधेः साधनौ[3] गमकौ ।

**एकः प्रतिषेधहेतुः ।**

एकः प्रतिषेधस्य हेतुर्गमकः । प्रतिषेध इति चाभावोऽभावव्यवहार-श्चोक्तो द्रष्टव्यः । तदयमर्थो हेतुः साध्यसिद्ध्यर्थत्वात्साध्याङ्गम् । साध्यं प्रधानम् । अतश्च साध्योपकरणस्य हेतोः प्रधानसाध्यभेदाद्भेदो न स्वरूप-भेदात् । साध्यश्च कश्चिद्विधिः कश्चित्प्रतिषेधः । विधिप्रतिषेधयोश्च परस्पर[4]परिहारेणावस्थानात्तयोर्हेतू भिन्नौ । विधिरपि कश्चिद्धेतोर्भिन्नः कश्चि-दभिन्नः । भेदाभेदयोरप्यन्योन्यत्यागेनात्मस्थितेर्भिन्नौ हेतू । ततः साध्यस्य परस्परविरोधाद्धेतवो[5] भिन्ना न तु स्वत एवेति ।

कस्मात्पुनस्त्रयाणां हेतुत्वं कस्माच्चान्येषामहेतुत्वमित्याशङ्क्य यथा त्रयाणामेव हेतुत्वमन्येषां चाहेतुत्वं तदुभयं दर्शयितुमाह—

**स्वभावप्रतिबन्धे हि सत्यर्थोऽर्थं गमयेत् ।**

स्वभावेन प्रतिबन्धः स्वभावप्रतिबन्धः । साधनं कृतेति समासः । स्वभावप्रतिबद्धत्वं प्रतिबद्धस्वभावत्वमित्यर्थः । कारणे[7] स्वभावे च साध्ये स्वभावेन प्रतिबन्धः कार्यस्वभावयोरविशिष्ट इत्येकेन समासेन द्वयोरपि संग्रहः । हिर्यस्मादर्थे । यस्मात्स्वभावप्रतिबन्धे सति साधनार्थः साध्यार्थं गमयेत्तस्मात्त्रयाणां गमकत्वमन्येषामगमकत्वम् ।

कस्मात्पुनःस्वभावप्रतिबन्ध एव सति गम्यगमकभावो नान्यथेत्याह—

**तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात् ।**

तदिति स्वभाव उक्तः । तेन स्वभावेनाप्रतिबद्धस्तदप्रतिबद्धः । यो

---

१ 'युक्तम्' इति पाठः क० पुस्तक एव विद्यते । सर्वत्रान्यत्र तु 'अयुक्तं' इत्येव पाठः । मुद्रितपुस्तकस्य सम्पादकेनापि 'अयुक्त' एव प्रयुक्तम् । अस्माकं सम्मतौ तु 'अयुक्तं' अत्रायुक्तमेव । २ अत्रेति एषु, ख० अत्रेति अत्र । ३ इदं पदं ख० पुस्तके न विद्यते । ४ इदं पदं ख० पुस्तके न विद्यते । ५ परस्पर०, ख० परस्परम् । ६ हेतवः, ख० हेतवोऽपि । ७ कारणे, ख० कारण० ।

यत्र स्वभावेन न प्रतिबद्धस्तस्य तदप्रतिबद्धस्य तदव्यभिचारनियमाभाव[१]स्तस्याप्रतिबद्ध[२]विषयस्याव्यभिचारस्तदव्यभिचारस्तस्य नियमस्तदव्यभिचारनियमस्तस्याभावात् । अयमर्थः । न हि यो यत्र स्वभावेन न[३] प्रतिबद्धः स तमप्रतिबद्ध[४]विषयमवश्यमेव न व्यभिचरतीति नास्ति तयोरव्यभिचारनियमः । अविनाभावनियमः । अव्यभिचारनियमाच्च गम्यगमकभावः । नहि योग्यतया प्रदीपवत्परोक्षार्थप्रतिपत्तिनिमित्तमिष्टं लिङ्गम् । अपि त्वव्यभिचारित्वेन निश्चितम् । ततः स्वभावप्रतिबन्धे सत्यविनाभाव[५]निश्चयः । ततो गम्यगमकभावः । तस्मात्स्वभावप्रतिबन्धे सत्यर्थोऽर्थं गमयेन्नान्यथेति स्थितम् ।

ननु च परायत्तस्य प्रतिबन्धोऽपरायत्ते । तदिह साध्यसाधनयोः कस्य क[६] प्रतिबन्ध इत्याह—

**स च प्रतिबन्धः साध्येऽर्थे लिङ्गस्य वस्तुत[७]स्तादात्म्यात्साध्यार्थादुत्पत्तेश्च ।**

स च स्वभावप्रतिबन्धो लिङ्गस्य साध्येऽर्थे । लिङ्गं परायत्तत्वात्प्रतिबद्धम् । साध्यस्त्वर्थोऽपरायत्तत्वात्प्रतिबन्धविषयो न प्रतिबद्ध इत्यर्थः । तत्रायमर्थस्तादात्म्याविशेषेऽपि यत्प्रतिबद्धं तद्गमकम् । यत्प्रतिबन्धविषयस्तद्गम्यम् । यस्य च धर्मस्य यन्नियतः स्वभावः स तत्प्रतिबद्धो यथा प्रयत्नानन्तरीयकत्वाख्योऽनित्यत्वे । यस्य तु स चान्यश्च स्वभावः स प्रतिबन्धविषयः । न तु प्रतिबद्धः । यथानित्यत्वाख्यः प्रयत्नानन्तरीयकत्वाख्ये । निश्चयापेक्षो हि गम्यगमकभावः । प्रयत्नानन्तरीयकत्वमेव चानित्यस्वभावं निश्चितम् । अतस्तदेवानित्यत्वे प्रतिबद्धं, तस्मान्नियतविषय एव गम्यगमकभावो नान्यथेति । कस्मात्पुनः स्वभावप्रतिबन्धो लिङ्गस्य न वस्तुर्न[८] इत्याह । वस्तुत इत्यादि । स साध्योऽर्थ आत्मा[९] स्वभावो यस्य तत्तदात्मा

१ अभावः, ख० अभावात् । २ अप्रतिबद्ध०, ख० अप्रतिबन्ध० । ३ इदं पदं ख० पुस्तके न विद्यते । ४ अप्रतिबद्ध० ख० अप्रतिबन्ध० । ५ अविनाभावनिश्चयः, ख० अविनाभावित्वनिश्चयः । ६ क, ख० कः । ७ अस्माकं सम्मतौ 'वस्तुतः' अन्यत्र तु 'वस्तुनः' । ८ 'न वस्तुनः' इति पाठः ख० पुस्तक एवोपलभ्यते । ९ 'अर्थ आत्मा' इति पाठः ख० पुस्तके न विद्यते ।

तस्य भावस्तादात्म्यं[1] तस्माद्धेतोर्यतः साध्यस्वभावं साधनं तस्मात्तत्र[2] स्वभावप्रतिबद्धमित्यर्थः । यदि साध्यस्वभावं साधनं साध्यसाधनयोरभेदात्प्रतिज्ञा[3]र्थैकदेशो हेतुः स्यादित्याह वस्तुत इति । परमार्थसता रूपेणाभेदः । तयोर्विकल्पविषयस्तु यत्समारोपितं रूपं तदपेक्षः साध्यसाधनभेदः । निश्चयापेक्ष[4] एव हि गम्यगमकभावः । ततो निश्चयारूढरूपापेक्ष एव तयोर्भेदो युक्तो वास्तवस्त्वभेद इति । न केवलं तादात्म्यादपि तु ततः साध्यादर्थादुत्पत्तिर्लिङ्गस्य[5] तदुत्पत्तेश्च साध्येऽर्थे स्वभावप्रतिबन्धो लिङ्गस्य ।

कस्मान्निमित्तद्वयात्स्वभावप्रतिबन्धो लिङ्गस्य नान्यस्मादित्याह—

**अतत्स्वभावस्यातदुत्पत्तेश्च तत्राप्रतिबद्धस्वभावत्वात् ।**

स स्वभावोऽस्य सोऽयं तत्स्वभावः । न तत्स्वभावोऽतत्स्वभावः । तस्मादुत्पत्तिरस्य सोऽयं तदुत्पत्तिः न तथातदुत्पत्तिः । यो यत्स्वभावो यदुत्पत्तिश्च न भवति तस्यातत्स्वभावस्यातदुत्पत्तेश्च । तत्रातत्स्वभावेऽनुत्पादके चाप्रतिबद्धः स्वभावोऽस्येति सोऽयमप्रतिबद्धस्वभावस्तस्य भावोऽप्रतिबद्धस्वभावत्वं तस्मादप्रतिबद्धस्वभावत्वात् । यद्यतत्स्वभावेऽनुपादके च कश्चित्प्रतिबद्धस्वभावो भवेत्, भवेदन्यतोऽपि निमित्तात्स्वभावप्रतिबन्धः । प्रतिबद्धस्वभावत्वं हि स्वभावप्रतिबन्धो न चान्यः कश्चिदायत्तस्वभावः । तस्मात्तादात्म्यतदुत्पत्तिभ्यामेव स्वभावप्रतिबन्धः ।

भवतु नाम तादात्म्यतदुत्पत्तिभ्यामेव स्वभावप्रतिबन्धः कार्यस्वभावयोरेव तु गमकत्वं कथमित्याह—

**ते च तादात्म्यतदुत्पत्ती स्वभावकार्ययोरेवेति ताभ्यामेव वस्तुसिद्धिः ।**

इतिस्तस्मादर्थे । यस्मात्स्वभावे कार्य एव च तादात्म्यतदुत्पत्ती स्थिते तन्निबन्धनश्च गम्यगमकभावस्तस्मात्ताभ्यामेव कार्यस्वभावाभ्यां वस्तुनो विधेः सिद्धिः ।

---

१ तादात्म्यं, ख० तादात्म्यं तत्स्वभावत्वम् । २ इदं पदं ख० पुस्तक एवोपलभ्यते । ३ धर्मधर्मीसमुदायो प्रतिज्ञा । तदेकदेशो धर्मो धर्मी वा । ४ निश्चयापेक्ष एव, ख० निश्चयापेक्षया एवं । ५ लिङ्गस्य, ख० लिङ्गस्य स्यात् ।

अथ प्रतिषेधसिद्धिरदृश्यानुपलम्भादपि कस्मान्नेष्टेत्याह—

**प्रतिषेधसिद्धिरपि यथोक्ताया एवानुपलब्धेः ।**

प्रतिषेधव्यवहारस्य सिद्धिर्यथोक्ता या दृश्यानुपलब्धिस्तत एव भवति यतस्तस्मादन्यतो नोक्ता ।

ततस्तावत्कस्माद्भवतीत्याह—

**सति वस्तुनि तस्या असंभवात् ।**

सति तस्मिन्प्रतिषेध्ये वस्तुनि यस्माद्दृश्यानुपलब्धिर्न संभवति तस्मादसंभवात्ततः प्रतिषेधसिद्धिः ।

अथ तत एव कस्मादित्याह—

**अन्यथा चानुपलब्धिलक्षणप्राप्तेषु देशकालस्वभावविप्रकृष्टेष्वात्मप्रत्यक्षनिवृत्तेरभावनिश्चयाभावात् ।**

सति वस्तुनि तस्या अदृश्यानुपलब्धेः संभवादित्यन्यथा शब्दार्थः । एतस्मात्कारणान्नान्यस्या अनुपलब्धेः प्रतिषेधसिद्धिः । कुत एतत्सत्यपि वस्तुनि तस्याः संभव इत्याह । अनुपलब्धिलक्षणप्राप्तेष्वित्यादि । इह प्रत्ययान्तरसाकल्यात्स्वभावविशेषाच्चोपलब्धिलक्षणप्राप्तार्थ उक्तः । द्वयोरेकस्याप्यभावेऽनुपलब्धिलक्षणप्राप्तोऽर्थ उच्यते[१] । तदिहानुपलब्धिलक्षणप्राप्तेष्विति प्रत्ययान्तरकैवल्यवन्त उक्ताः । देशकालस्वभावविप्रकृष्टेष्विति । स्वभावविशेषविप्रकृष्टा[२] उक्ताः । देशश्च कालश्च स्वभावश्च तैर्विप्रकृष्टा इति विग्रहः । तेष्वभावनिश्चयस्याभावात् । सत्यपि वस्तुनि तस्याभाव इष्टः । कस्मान्निश्चयाभाव इत्याह । तेषु प्रतिपत्तुरात्मनो[३] यत्प्रत्यक्षं तस्य निवृत्तेः कारणान्निश्चयाभावः । यस्मादनुपलब्धिलक्षणप्राप्तेष्वात्मप्रत्यक्षनिवृत्तेरभावनिश्चयाभावस्तस्मात्सत्यपि वस्तुन्यात्मप्रत्यक्षनिवृत्तिलक्षणाया अदृश्यानुपलब्धेः संभवः । ततो यथोक्ताया एव प्रतिषेधसिद्धिः ।

---

१. 'एकस्य' इति पाठ० ख० पुस्तक एव विद्यते । क० पुस्तके मुद्रितपुस्तके च 'एकैकस्य' इति पाठ उपलभ्यते । २. स्वभावविशेषविप्रकृष्टाः, ख० स्वभावविशेषरहिताः । ३. ज्ञातुः ।

अथेयं दृश्यानुपलब्धिः कस्मिन्काले प्रमाणं किंस्वभावा किंव्यापारा चेत्याह—

**अमूढस्मृतिसंस्कारस्यातीतस्य वर्तमानस्य च प्रतिपत्तृ-प्रत्यक्षस्य निवृत्तिरभावव्यवहारसाधनी ।**

प्रतिपत्तुः प्रत्यक्षो घटादिरर्थस्तस्य निवृत्तिरनुपलब्धिस्तदभावस्वभावेति यावत् । अत एवाभावो न साध्यः स्वभावानुपलब्धेः सिद्धत्वात् । अविद्यमानोऽपि च घटादिरेकज्ञानसंसर्गिणि भूतले[1] भासमाने समग्रसामग्रीको ज्ञायमानो दृश्यमानतया[2] संभावितत्वात्प्रत्यक्ष उक्तः । अत एकज्ञानसंसर्गी[3] दृश्यमानोऽर्थस्तज्ज्ञानं च प्रत्यक्षनिवृत्तिरुच्यते । ततो हि दृश्यमानादर्थात्तद्बुद्धेश्च समग्रदर्शनसामग्रीकत्वेन[4] प्रत्यक्षतया संभावितस्य निवृत्तिरवसीयते । तस्मादर्थज्ञान एव प्रत्यक्षस्य घटस्याभाव उच्यते । न तु निवृत्तिमात्रमिहाभावो निवृत्तिमात्राद्दृश्यनिवृत्त्यनिश्चयात् । ननु च दृश्यनिवृत्तिरवसीयते दृश्यानुपलम्भात् । सत्यमेवैतत् । केवलमेकज्ञानसंसर्गिणि दृश्यमाने घटो यदि भवेद्दृश्य एव भवेदिति दृश्यः संभावितस्ततो दृश्यानुपलब्धिर्निश्चिता । दृश्यानुपलब्धिनिश्चयसामर्थ्यादेव च दृश्याभावो निश्चितः । यदि हि दृश्यस्तत्र भवेद्दृश्यानुपलम्भो न भवेत् । अतो दृश्यानुपलम्भनिश्चयाद्दृश्याभावः सामर्थ्यादवसितो न तु[5] व्यवहृत इति दृश्यानुपलम्भेन व्यवहर्तव्यः । तस्मादर्थान्तरमेकज्ञानसंसर्गि दृश्यमानं तज्ज्ञानं च प्रत्यक्षनिवृत्तिनिश्चयहेतुत्वात्प्रत्यक्षनिवृत्तिरुक्तं द्रष्टव्यम् । यथा चैकज्ञानसंसर्गिणि प्रत्यक्षघटस्य प्रत्यक्षत्वमारोपितमसतोऽपि तथा तस्मिन्नेकज्ञानसंसर्गिण्यतीते वर्तमाने चामूढस्मृतिसंस्कारे च घटस्य तद्रूपमारोपितमसत इति द्रष्टव्यम् । अनेन दृश्यानुपलब्धिः प्रत्यक्षघटनिवृत्तिस्वभावोक्ता । सा च सिद्धा तेन न[6] घटाभावः साध्योऽपि त्वभावव्यवहार इत्युक्तम् ।

१. इदं पदं ख० पुस्तक एवोपलभ्यते । २ 'दृश्यमानतया' इति पाठः ख० पुस्तक एवास्ति । अन्यत्र सर्वत्र तु 'दृश्यतया' इत्येव पाठः । ३. संसर्गी, ख० संसर्गात् । ४. समग्र, ख० समय । ५. 'तु' इति पाठः ख० पुस्तके नैवोपलभ्यते । ६. 'न' इति पाठः ख० पुस्तके नैवोपलभ्यते ।

अमूढोऽभ्रष्टो दर्शनाहितः स्मृतिजननरूपः संस्कारो यस्मिन्घटादौ स तथोक्तः। तस्यातीतस्य प्रतिपत्तृप्रत्यक्षस्येति सम्बन्धः। वर्तमानस्य च प्रतिपत्तृप्रत्यक्षस्येति सम्बन्धः। अमूढस्मृतिसंस्कारग्रहणन्तु न वर्तमानविशेषणम्। यस्मादतीते घटविविक्तप्रदेशदर्शने स्मृतिसंस्कारो मूढो दृश्यघटानुपलम्भे दृश्ये च घटेऽमूढो भवति। वर्तमाने च घटरहितप्रदेशदर्शने न स्मृतिसंस्कारमोहः। अत एव न[2] घटानुपलम्भे नापि घटे मोहः। तस्मान्न वर्तमानविशेषणममूढस्मृ[1]तिसंस्कारग्रहणम्। स्मृतिसंस्कारव्यभिचाराभावाद्वर्तमानस्यार्थस्य। अत एव वर्तमानस्य चेति। चशब्दः कृतो विशेषणरहितस्य वर्तमानस्य विशेषणवतातीतेन समुच्चयो यथा विज्ञायेतेति[3]। तदयमर्थोऽतीतोऽनुपलम्भः स्फुटं[4] स्मर्यमाणः प्रमाणं वर्तमानश्च। ततो नासीदिह घटोऽनुपलब्धत्वान्नास्त्यनुपलभ्यमानत्वादिति शक्यं ज्ञातुम्। न तु न भविष्यत्यत्र घटोऽनुपलप्स्यमानत्वादिति[5] शक्यं ज्ञातुम्। अनागताया अनुपलब्धेः सत्त्वसन्देहादिति। कालविशेषोऽनुपलब्धेर्व्याख्यातः।

व्यापारं दर्शयति। अभावस्य व्यवहारो नास्तीत्येवमाकारं ज्ञानं शब्दश्चैवमाकारो निःशङ्कं[6] गमनागमनलक्षणा च प्रवृत्तिः कायिकोऽभावव्यवहारः। घटाभावे हि ज्ञाते निःशङ्कं गन्तुमागन्तुं च प्रवर्तते। तदेवमेतस्य[7] त्रिविधस्याप्यभावव्यवहारस्य[8] दृश्यानुपलब्धिः साधनी प्रवर्तिका। यद्यपि च नास्ति घट इति ज्ञानमनुपलब्धेरेव भवत्ययमेव चाभावनिश्चयस्तथापि यस्मात्प्रत्यक्षेण केवलः प्रदेश उपलब्धस्तस्मादिह घटो नास्तीत्येवं च प्रत्यक्षव्यापारमनुसरत्यभावनिश्चयः। तस्मात्प्रत्यक्षस्य केवलप्रदेशग्रहणव्यापारानुसार्यभावनिश्चयः प्रत्यक्षकृतः। किञ्च। दृश्यानुपलम्भनिश्चयकरणसामर्थ्यादेव पूर्वोक्तया नीत्या प्रत्यक्षेणैवाभावो निश्चितः। केवलमदृष्टानामपि सत्त्वसंभवात्। सत्त्वशङ्कया न शक्नोत्यसत्त्वं व्यवहर्तुम्।

---

१. स्मृतिसंस्कारः। २. इदं पदं ख० पुस्तके न विद्यते। ३. 'इति' इति पाठः ख० पुस्तके न विद्यते। ४. स्फुटं, क० स्फुटः। ५. अनुपलप्स्यमानत्वात्, क० अनुपलभ्यमानत्वात्। ६. निःशङ्कं गमनागमन०, ख० निःशंकगमागम०। ७. तदेवमेतस्य, ख० तदेव तस्य। ८. व्यवहारस्य, क० व्यवहार०।

अतोऽनुपलम्भोऽभावं व्यवहारयति । दृश्यो यतोऽनुपलब्धस्तस्मान्नास्तीत्यतो दृश्यानुपलम्भोऽभावज्ञानं कृतं प्रवर्तयति न त्वकृतं करोतीत्यभावनिश्चयोऽनुपलम्भात्प्रवृत्तोऽपि प्रत्यक्षेण कृतोऽनुपलम्भेन प्रवर्तित उक्त इत्यभावव्यवहारप्रवर्तिन्युपलब्धिः[2] ।

कस्मात्पुनरतीते वर्तमाने चानुपलब्धिर्गमिकेत्याह—

## तस्या एवाभावनिश्चयात् ।

तस्या एव यथोक्तकालाया अनुपलब्धेरभावनिश्चयात् । अनागता ह्यनुपलब्धिः स्वयमेव संदिग्धस्वभावा । तस्या असिद्धाया नाभावनिश्चयोऽपि त्वतीतवर्तमानाया इति ।

संप्रत्यनुपलब्धेः प्रकारभेदं दर्शयितुमाह—

## सा च प्रयोगभेदादेकादशप्रकारा ।

सा चैषानुपलब्धिरेकादशप्रकारा, एकादश प्रकारा अस्या इत्येकादशप्रकारा[3] । कुतः प्रकारभेदः प्रयोगभेदात् । प्रयोगः प्रयुक्तिः शब्दस्याभिधानव्यापार उच्यते । शब्दो हि साक्षात्कचिदर्थान्तराभिधायी कचित्प्रतिषेधान्तराभिधायी । सर्वत्रैव तु दृश्यानुपलब्धिरशब्दोपात्तापि गम्यत इति वाचकव्यापारभेदादनुपलम्भप्रकारभेदो[4] न तु स्वरूपभेदादिति यावत् ।

प्रकारभेदानाह—

## स्वभावानुपलब्धिर्यथा । नात्र धूम उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति ।

प्रतिषेध्यस्य यः स्वभावस्तस्यानुपलब्धिः । यथेति । अत्रेति धर्मी न धूम इति साध्यम् । उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति हेतुः । अयं च हेतुः पूर्ववद्व्याख्येयः ॥ १ ॥

---

१. इदं पदं क० पुस्तके नैव विद्यते । २ 'प्रवर्तिनी' इत्ययमेव पाठः ख० पुस्तके विद्यते । क० पुस्तके स्पष्टरूपेण 'प्रवर्त्तनमुपल०' इति लिखितं यच्च 'प्रवर्त्तन्युपल०' इत्यशुद्धे रूपे विकारितम् । ३. ख० पुस्तके 'एकादशप्रकारा एकादश प्रकारा अस्य इत्येकादशप्रकारा' इति लिखितम् । मुद्रितपुस्तके क० पुस्तके च 'एकादश प्रकारा अस्या इत्येकादशप्रकारा' इति पाठः । ४. भेदात्, क० भेद० ।

**कार्यानुपलब्धिर्यथा । नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमाभावात् ।**

प्रतिषेध्यस्य यत्कार्यं तस्यानुपलब्धिरुदाह्रियते । यथेति । इहेति धर्मी । अप्रतिबद्धमनुपहतं धूमजननं प्रति सामर्थ्यं येषां तान्यप्रतिबद्धसामर्थ्यानि न सन्तीति साध्यम् । धूमाभावादिति हेतुः । कारणानि च नावश्यं कार्यवन्ति भवन्तीति कार्यादर्शनादप्रतिबद्धसामर्थ्यानामेवाभावः साध्यः । न त्वन्येषाम् । अप्रतिबद्धशक्तीनि चान्त्यक्षणभावीन्येवान्येषां प्रतिबन्धसंभवात् । कार्यानुपलब्धिश्च यत्र कारणमदृश्यं तत्र प्रयुज्यते दृश्ये तु कारणे दृश्यानुपलब्धिरेव गमिका । तत्र धवलगृहोपरि-[1] स्थितो गृहाङ्गणमपश्यन्नपि चतुर्षु पार्श्वेष्वङ्गणभित्तिपर्यन्तं पश्यति । भित्तिपर्यन्तसमं चालोकसंज्ञकमाकाशदेशं धूमविविक्तं पश्यति । तत्र धूमाभावनिश्चयाद्यद्देशस्थेन वह्निना जन्यमानो धूमस्तद्देशः स्यात् । तस्य च वह्नेरप्रतिबद्धसामर्थ्यस्याभावः प्रतिपत्तव्यः । तद्गृहाङ्गणदेशेन[3] वह्निना जन्यमानो धूमस्तद्देशः[4] स्यात् । तस्मात्तद्देशस्य वह्नेरभावः प्रतिपत्तव्यः । तद्गृहाङ्गणदेशं भित्तिपरिक्षिप्तं भित्तिपर्यन्तपरिक्षिप्तेन चालोकात्मना धूमविविक्तेनाकाशदेशेन सह धर्मिणं करोति । तस्माद्दृश्यमानादृश्यमानाकाशदेशावयवः[5] प्रत्यक्षाप्रत्यक्षसमुदायो वह्न्यभावप्रतीतिसामर्थ्यायातो धर्मी न दृश्यमान एव । इहेति तु प्रत्यक्षनिर्देशो दृश्यमानभागापेक्षो न केवलमिहैव दृश्यादृश्यसमुदायो धर्म्यपि त्वन्यत्रापि । शब्दस्य क्षणिकत्वे साध्ये कश्चिदेव शब्दः प्रत्यक्षोऽन्यस्तु परोक्षस्तद्वदिहापि । यथा चात्र धर्मी साध्यप्रतिपत्त्यधिकरणभूतो दृश्यादृश्यावयवो दर्शितस्तद्वदुत्तरेष्वपि प्रयोगेषु स्वयं प्रतिपत्तव्यः ॥ २ ॥

**व्यापकानुपलब्धिर्यथा । नात्र शिंशपा वृक्षाभावादिति ।**

प्रतिषेध्यस्य व्याप्यस्य यो व्यापको धर्मस्तस्यानुपलब्धिरुदाह्रियते ।

---

१. धवलगृह० ख० धवलगृहस्य । २. ख० पुस्तके नायं पाठो दृश्यते । ३. क० तद्गृहाङ्गणदेशेन भ ( अशुद्धः ) वह्निना । ख० तद्गृहांगणस्थेन च । ४. 'तद्देशः' इति पाठः ख० पुस्तके 'तादृशः' इवावलोक्यते । ५. दृश्यमानादृश्यमानाकाशदेशावयवः, क० दृश्यमानाकारी ( अशुद्धः ) देशावयवः ।

यथेति । अत्र धर्मी । न शिंशपेति शिंशपाभावः साध्यः । वृक्षस्य व्यापकस्याभावादिति हेतुः । इयमप्यनुपलब्धिर्व्याप्यस्य शिंशपात्वस्य[1] दृश्याभावे प्रयुज्यते । उपलब्धिलक्षणप्राप्ते तु व्याप्ये दृश्यानुपलब्धिर्गमिका । तत्र यदा पूर्वापरावुपश्लिष्टौ समुन्नतौ देशौ भवतस्तयोरेकस्तरुगहनोपेतोऽपरश्चैकशिलाघटितो निर्वृक्षकश्च । द्रष्टापि तत्स्थान्वृक्षान्पश्यन्नपि शिंशपादिभेदं न[2] यो विवेचयति । तस्य वृक्षत्वं प्रत्यक्षमप्रत्यक्षं शिंशपात्वम् । स हि निर्वृक्ष एकशिलाघटिते वृक्षाभावं दृश्यत्वाद्दृश्यानुपलम्भादवस्यति । शिंशपात्वाभावं तु व्यापकस्य वृक्षस्याभावादिति । तादृशे[3] विषयेऽस्या अभावसाधनाय प्रयोगः ॥ ३ ॥

## स्वभावविरुद्धोपलब्धिर्यथा । नात्र शीतस्पर्शोऽग्नेरिति ।

प्रतिषेध्यस्य स्वभावेन विरुद्धस्योपलब्धिरुदाह्रियते । यथेति । अत्रेति धर्मी । न शीतस्पर्श इति[4] शीतस्पर्शप्रतिषेधः साध्यः । वह्नेरिति हेतुः । इयं चानुपलब्धिस्तत्र प्रयोक्तव्या यत्र शीतस्पर्शोऽदृश्यः । दृश्ये[6] दृश्यानुपलब्धिप्रयोगात् । तस्माद्यत्र वर्णविशेषाद्वह्निर्दृश्यः शीतस्पर्शो दूरस्थत्वा[7]-त्सन्नप्यदृश्यस्तत्रास्याः प्रयोगः ॥ ४ ॥

## विरुद्धकार्योपलब्धिर्यथा । नात्र शीतस्पर्शो धूमादिति ।

प्रतिषेध्येन यद्विरुद्धं तत्कार्यस्योपलब्धिर्गमिका । यथेति । अत्रेति धर्मी । न शीतस्पर्श इति शीतस्पर्शाभावः साध्यः । धूमादिति हेतुः । यत्र शीतस्पर्शः सन्दृश्यः स्यात्तत्र दृश्यानुपलब्धिर्गमिका । यत्र विरुद्धो वह्निः प्रत्यक्षस्तत्र विरुद्धोपलब्धिः । द्वयोरपि तु परोक्षत्वे विरुद्धकार्योपलब्धिः[8] प्रयुज्यते । तत्र[9] समस्तापवरकस्थं शीतं निवर्तयितुं समर्थस्याग्नेरनुमापकं यदा विशिष्टं धूमकलापं निर्यान्तमपवरकात्पश्यति तदा विशिष्टाद्वह्नेरनुमिताच्छीतस्पर्शनिवृत्तिमनुमिमीते[10] । इह दृश्यमानद्वारप्रदेशसहितः सर्वापवरका[11]भ्यन्तरदेशो धर्मी साध्यप्रतिपत्त्यनुसरणात्पूर्ववद्द्रष्टव्यः ॥ ५ ॥

---

१. शिंशपात्वस्य, ख० शिंशपात्व० । २. न यः, ख० यो न । ३. तादृशे क० तादृश० । ४. पाठोऽयं ख० पुस्तके नैवोपलभ्यते । ५ क० पुस्तके 'इति' इत्यसंगृह्य 'न शीतस्पर्श' इत्यशुद्धो पाठो विद्यते । ६. दृश्ये, क० दृश्यो, ख० दृश्ये तु । ७. दूरस्थत्वात् , ख० दूरत्वात् । ८. विरुद्ध०, क० विरोध० । ९. तत्र, क० यत्र । १०. निवृत्तिमनुमिमीते, क० निवृत्तिरनुमीयते । ११. सर्वापवरक०, ख० सर्वोपवरक० ।

**विरुद्धव्याप्तोपलब्धिर्यथा । न ध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणादिति ।**

प्रतिषेध्यस्य यद्विरुद्धं तेन व्याप्तस्य धर्मान्तरस्योपलब्धिरुदाहर्तव्या । यथेति । ध्रुवमवश्यं भवतीति[1] ध्रुवभावी नेतिध्रुवभावित्वनिषेधः साध्यः । विनाशो धर्मी । भूतस्यापि भावस्येति धर्मिविशेषणम् । भूतस्य जातस्यापि विनश्वरः स्वभावो नावश्यंभावी किमुताजातस्येत्यपि शब्दार्थः । जनना-[2]द्धेतोरन्यो हेतुर्हेत्वन्तरं मुद्गरादि तदपेक्षते विनश्वरः[3] । तस्यापेक्षणादिति हेतुः । हेत्वन्तरापेक्षणं नामाध्रु[4]वभावित्वेन व्याप्तम् । यथा वाससि रागस्य रञ्ज[5]नादिहेत्वन्तरापेक्षणध्रुवभावित्वेन व्याप्तम् । ध्रुवभावित्वविरुद्धं चाध्रुवभावित्वम् । विनाशश्च विनश्वरस्वभावात्मा हेत्वन्तरापेक्ष इष्टः । ततो विरुद्धव्याप्तहेत्वन्तरापेक्षणदर्शनाद् ध्रुवभावित्वनिषेधः । इह ध्रुवभावित्वं नित्यत्वमध्रुवभावित्वं[6] चानित्यत्वम् । नित्यत्वानित्यत्वयोश्च परस्परपरिहारेणावस्थानादेकत्र विरोधः । तथा च सति परस्परपरिहारवतोर्द्वयोर्यदेकं दृश्यते तत्र द्वितीयस्य तादात्म्यनिषेधः कार्यः । तादात्म्यनिषेधश्च दृश्य-[7]तयाऽभ्युपगतस्य संभवति । यत[8] एवं तादात्म्यनिषेधः क्रियते यद्ययं दृश्यमानो नित्यो भवेन्नित्यरूपो दृश्येत । न च नित्यरूपो दृश्यते । तस्मान्न नित्यः । एवं च प्रतिषेध्यस्य नित्यत्वस्य दृश्यमानात्मत्व[9]मभ्युपगम्य प्रतिषेधः कृतो भवति । वस्तुनोऽप्यदृश्यस्य पिशाचादेर्यदि[10] दृश्यघटात्मत्वनिषेधः[11] क्रियते दृश्यात्मत्वमभ्युपगम्य कर्तव्यः । [12]यद्ययं दृश्यमानः पिशाचात्मा भवेत्पिशाचो दृष्टो भवेत् । न च दृष्टस्तस्मान्न पिशाच इति दृश्यात्मत्वाभ्युपगमपूर्वको दृश्यमाने घटादौ वस्तुनि वस्तुनोऽवस्तुनो वा दृश्यस्यादृश्यस्य च तादात्म्यनिषेधः । तथा च सति यथा घटस्य दृश्यत्वमभ्युपगम्य [13]प्रतिषेधो दृश्यानुपलम्भादेव तद्वत्सर्वस्य परस्परपरिहारवतोऽ-

---

१ पाठोऽयं ख० पुस्तके न विद्यते । २ जननात्, ख० जनकात् । ३ विनश्वरः । नश्वरस्य, क० विनश्वरस्य । ४ नामाध्रुव०, ख० नाध्रुव० । ५ रञ्जनादि०, ख० रजकादि० । ६ इदं पदं ख० पुस्तके न विद्यते । ७ दृश्यतया, क० तया । ८ यतः, क० यः । ९ दृश्यमानात्मत्वं, ख० दृश्यमानात्मकत्वम् । १० यदि, ख० यदैव । ११ दृश्यघटात्मत्व०, ख० दृश्यघटात्मकत्व० । १२ यद्ययं, ख० यद्ययं घटः । १३ प्रतिषेधः, ख० निषेधः ।

न्यत्र दृश्यमाने निषेधो दृश्यानुपलम्भादेव । तथा चास्यैवंजातीयकस्य प्रयोगस्य स्वभावानुपलब्धावन्तर्भावः ॥ ६ ॥

## कार्यविरुद्धोपलब्धिर्यथा । नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्त्यग्नेरिति ।

प्रतिषेध्यस्य यत्कार्यं तस्य यद्विरुद्धं तस्योपलब्धेरुदाहरणम् । यथेति । इहेति धर्मी । अप्रतिबद्धं सामर्थ्यं येषां शीतकारणानां शीतजननं प्रति न[1] तानि सन्तीति साध्यम् । वह्नेरिति[2] हेतुः । यत्र शीतकारणान्यदृश्यानि शीतस्पर्शोऽप्यदृश्यस्तत्रायं हेतुः प्रयोक्तव्यः । दृश्यत्वे तु शीतस्पर्शस्य तत्कारणानां वा कार्यानुपलब्धिर्दृश्यानुपलब्धिर्वा गमिका । तस्मादेषाऽप्य-भावसाधनी । ततो यस्मिन्देशे सदपि शीतकारणमदृश्यं शीतस्पर्शश्च दूरस्थत्वात्प्रतिपत्तुर्वह्निर्भास्वरवर्णत्वाद् दूरादपि दृश्यस्तत्रायं प्रयोगः ॥ ७ ॥

## व्यापकविरुद्धोपलब्धिर्यथा । नात्र तुषारस्पर्शोऽग्नेरिति ।

प्रतिषेधस्य यद्व्यापकं तेन यद्विरुद्धं तस्योपलब्धिरुदाहर्तव्या । यथेति । अत्रेति धर्मी । तुषारस्पर्शो नेति साध्यम् । वह्नेरिति[3] हेतुः । यत्र व्याप्य-स्तुषारस्पर्शो व्यापकश्च च शीतस्पर्शो न दृश्यस्तत्रायं हेतुः । तयोर्दृश्यत्वे स्वभावस्य व्यापकस्य चानुपलब्धिर्यतः प्रयोक्तव्या । तथा च[4] सत्यभाव-साधनीयम् । दूरवर्तिनश्च प्रतिपत्तुस्तुषारस्पर्शः शीतस्पर्शविशेषः । शीतमात्रं च परोक्षम् । वह्निस्तु रूपविशेषाद् दूरस्थोऽपि प्रत्यक्षः । ततो वह्नेः शीत-मात्राभावः । ततः शीतविशेषतुषारस्पर्शाभावनिश्चयः । शीतविशेषस्य शीतसामान्येन व्याप्तत्वादिति विशिष्टविषयेऽस्याः[5] प्रयोगः ॥ ८ ॥

## कारणानुपलब्धिर्यथा । नात्र धूमोऽग्न्यभावादिति ।

प्रतिषेध्यस्य यत्कारणं तस्यानुपलब्धेरुदाहरणम् । यथेति । अत्रेति धर्मी । न धूम इति साध्यम् । वह्न्यसत्त्वादिति हेतुः । यत्र कार्यं सदपि दृश्यं[6] न भवति तत्रायं प्रयोगः । दृश्ये तु कार्ये दृश्यानुपलब्धिर्गमिका ।

---

१ न तानि सन्तीति, ख० तानि न संती (अशुद्धः)। २ वह्नेः, ख० अग्नेः। ३ पदमिदं ख० पुस्तक एव दृश्यते । ४ पदमिदं ख० पुस्तके न दृश्यते । ५ विशिष्ट०, ख० विशिष्टे। ६ दृश्यं न भवति, ख० अदृश्यं भवति ।

ततोऽयमप्यभावसाधनः । निष्कम्पायतसलिलपूरिते ह्रदे हेमन्तोचितबाष्पोद्गमे विरले संध्यातमसि सति सन्नपि तत्र[1] धूमो न दृश्य[2] इति कारणानुपलब्ध्या प्रतिषेध्यते[3] । वह्निस्तु यदि तस्याम्भस उपरि प्लवमानो भवेज्ज्वलितो[4] रूपविशेषादेवोपलब्धो भवेत् । अज्वलितस्त्विन्धने[5]नमध्यनिविष्टो भवेत्तत्रापि दहनाधिकरणमिन्धनं प्रत्यक्षमिति स्वरूपेणाधाररूपेण वा दृश्य एव वह्निरिति तत्रास्याः प्रयोगः ॥ ९ ॥

## कारणविरुद्धोपलब्धिर्यथा । नास्य रोमहर्षादिविशेषाः संनिहितदहनविशेषत्वादिति ।

प्रतिषेध्यस्य यत्कारणं तस्य यद्विरुद्धं तस्योपलब्धेरुदाहरणम् । यथेति । अस्येति धर्मी । रोम्णां हर्ष उद्भेदः स आदिर्येषां दन्तवीणादीनां शीतकृतानां ते विशिष्यन्ते[6] तदन्येभ्यो भयश्रद्धादिकृतेभ्य इति रोमहर्षादिविशेषाः । ते न सन्तीति साध्यम् । दहन एव विशिष्यते[7] [8]तदस्माद्दहनाच्छीतनिवर्तनसामर्थ्येनेति दहनविशेषः । कश्चिद्दहनः सन्नपि न शीतनिवर्तनक्षमो यथा प्रदीपः । तादृशनिवृत्तये विशेषग्रहणम्[9] । संनिहितो दहनविशेषो यस्य स तथोक्तस्तस्य भावस्तस्मादिति हेतुः । यत्र शीतस्पर्शः सन्नप्यदृश्यो रोमहर्षादिविशेषाश्चादृश्यास्तत्रायं प्रयोगः । रोमहर्षादिविशेषस्य दृश्यत्वे दृश्यानुपलब्धिः प्रयोक्तव्या । शीतस्पर्शस्य दृश्यत्वे कारणानुपलब्धिः । तस्मादभावसाधनोऽयम् । रूपविशेषाद्विदूराद्दहनं पश्यति । शीतस्पर्शस्त्वदृश्यो रोमहर्षादिविशेषाश्च । तेषां कारणविरुद्धोपलब्ध्याभावः[10] प्रतिपद्यत इति । तत्रास्याः प्रयोगः ॥ १० ॥

## कारणविरुद्धकार्योपलब्धिर्यथा । न रोमहर्षादिविशेषयुक्तपुरुषवानयं प्रदेशो धूमादिति ।

प्रतिषेध्यस्य यत्कारणं तस्य यद्विरुद्धं तस्य यत्कार्यं[11] तस्योपलब्धिरुदा-

---

१ पदमिदं ख० पुस्तके न विद्यते । २ दृश्यः, ख० दृश्यते । ३ प्रतिषेध्यते, ख० प्रतिषिध्यते । ४ ज्वलितः, ख० प्रज्वलितः । ५ इन्धन, ख० वन । ६ विशिष्यन्ते, ख० विशेष्यन्ते । ७ विशिष्यते, ख० विशेष्यते । ८ पदमिदं ख० पुस्तके नैवोपलभ्यते । ९ दहनविशेषस्यैव शीतानिवृत्तौ कारणत्वात्, न दहनसामान्यस्य । १० क० भाव (अशुद्धः), ख० भावम् । ११ कार्य, मुद्रितपुस्तके 'कार्थं' (अशुद्धः) ।

हर्तव्या । यथेति । अयं देश[1] इति धर्मी । योगो युक्तं रोमहर्षादिविशेषै-र्युक्तं रोमहर्षादिविशेषयुक्तम्[2] । तस्य सम्बन्धी पुरुषो रोमहर्षादिविशेषयुक्त[3]-पुरुषः । तद्वान्न भवतीति साध्यम् । धूमादिति हेतुः । रोमहर्षादि[4]विशे-षस्य प्रत्यक्षत्वे दृश्यानुपलब्धिः । कारणस्य शीतस्पर्शस्य प्रत्यक्षत्वे कारणा-नुपलब्धिः । वह्निस्तु प्रत्यक्षत्वे कारणविरुद्धोपलब्धिः प्रयोक्तव्या । त्रया-णामप्यदृश्यत्वेऽयं प्रयोगः । तस्मादभावसाधनोऽयम् । तत्र[5] दूरस्थस्य प्रतिपत्तुर्दहनशीतस्पर्शरोमहर्षादिविशेषा अप्रत्यक्षाः सन्तोऽपि धूमस्तु प्रत्यक्षो यत्र तत्रैतत्प्रमाणम् । धूमस्तु यादृशस्तस्मिन्देशे[6] स्थितं शीतं निवर्तयितुं समर्थस्य वह्नेरनुमापकः स इह ग्राह्यः । धूममात्रेण तु[7] वह्नि-मात्रेऽनुमितेऽपि न शीतस्पर्शनिवृत्तिर्नापि रोमहर्षादिविशेष[8]निवृत्तिरवसातुं शक्येते न[9] धूममात्रं हेतुरिति द्रष्टव्यमिति ॥ ११ ॥

यद्येकः प्रतिषेधहेतुरुक्तः कथमेकादशाभावहेतव इत्याह—

**इमे सर्वे कार्यानुपलब्ध्यादयो दशानुपलब्धिप्रयोगाः स्वभावानुपलब्धौ संग्रहमुपयान्ति ।**

इमेऽनुपलब्धिप्रयोगाः । इदमानन्तरप्रयोगान्ता[10] निर्दिष्टाः । तत्र कियतामपि ग्रहणे प्रसक्त आह कार्यानुपलब्ध्यादय इति । कार्यानुपल-ब्ध्यादीनामपि त्रयाणां चतुर्णां वा ग्रहणे प्रसक्ते सत्याह[11] । दशेति । दशा-नामप्युदाहृतमात्राणां ग्रहणप्रसङ्गे सत्याह[12] । सर्व इत्येतदुक्तं भवति । अप्र-युक्ता अपि प्रयुक्तोदाहरणसदृशाश्च सर्व एवेति दशग्रहणमन्तरेण सर्वग्रहणे क्रियमाणे प्रयुक्तोदाहरणकार्त्स्न्यं गम्येत । दशग्रहणात्तदाहरण[13]कार्त्स्न्येऽवगते सर्वग्रहणमतिरिच्यमानमुदाहृतसदृशकार्त्स्न्यावगतये जायते । ते स्वभावा-नुपलब्धौ संग्रहतादात्म्येन गच्छन्ति । स्वभावानुपलब्धिस्वभावा इत्यर्थः ।

---

१ देशः, ख० प्रदेशः । २ पदमिदं ख० पुस्तके नोपलभ्यते । ३ विशेषयुक्त०, ख० विशेषगुणयुक्त० । ४ रोमहर्षादि०, ख० रोमहर्ष० । ५ तत्र, क० यत्र । ६ तस्मिन्देशे, ख० तद्देशे । ७ पदमिदं क० पुस्तके न विद्यते । ८ 'विशेष' इति पाठो ख० पुस्तके न विद्यते । ९ पाठोऽयं क० पुस्तके नास्ति । १० प्रयोगान्ताः, क० प्रयोक्तांन (अशुद्धः), ख० प्रक्रांता ११ सत्याह, क० त्याह (अशुद्धः)। १२ ख० पुस्तके 'सति' इति पाठो न विद्यते । १३ दशग्रहणात्तदाहरण०, ख० दशग्रहणोदाहरण० ।

ननु च स्वभावानुपलब्धिप्रयोगाद्भिद्यन्ते कार्यानुपलब्ध्यादयस्तत्कथमन्तर्भवन्तीत्याह—

**पारम्पर्येणार्थान्तरविधिप्रतिषेधाभ्यां प्रयोगभेदेऽपि प्रयोगदर्शनाभ्यासात्स्वयमप्येवं व्यवच्छेदप्रतीतिर्भवतीति स्वार्थेऽप्यनुमानेऽस्याः प्रयोगनिर्देशः ।**

प्रयोगभेदेऽपि । प्रयोगस्य शब्दव्यापारस्य भेदेऽपि अन्तर्भवन्ति । कथं प्रयोगभेद इत्याह । अर्थान्तरविधीत्यादि[1] । प्रतिषेध्यादर्थादर्थान्तरस्य[2] विधिरुपलब्धिः । स्वभावविरुद्धाद्युपलब्धिप्रयोगेषु प्रतिषेधः । कार्यानुपलब्ध्यादिप्रयोगेष्वर्थान्तरविधिनाऽर्थान्तरप्रतिषेधेन च प्रयोगा भिद्यन्ते । यदि प्रयोगान्तरेष्वर्थान्तरविधिप्रतिषेधौ कथं तर्ह्यन्तर्भवन्तीत्याह । पारम्पर्येणेति । प्रणालिकयेत्यर्थः । एतदुक्तं भवति । न साक्षादेते प्रयोगा दृश्यानुपलब्धिमभिदधति । दृश्यानुपलब्ध्यव्यभिचारिणं त्वर्थान्तरस्य विधिनिषेधं वाऽभिदधति । ततः प्रणालिकयाऽमीषां स्वभावानुपलब्धौ संग्रहो न साक्षादिति । यदि प्रयोगभेदेन भेदः परार्थानुमाने वक्तव्य एषः । शब्दभेदो हि प्रयोगभेदः । शब्दश्च[3] परार्थानुमानमित्याशङ्क्याह प्रयोगदर्शनेत्यादि । प्रयोगाणां शास्त्रघटितानां[4] दर्शनमुपलम्भः । तस्याभ्यासः पुनः पुनरावर्तनम् । तस्मान्निमित्तात्स्वयमपीति प्रतिपत्तुरात्मनोऽप्येवमित्यनन्तरोक्तेन क्रमेण व्यवच्छेद्यस्य प्रतिषेधस्य प्रतीतिर्भवतीति । इति[5] शब्दस्तस्मादर्थे । तदयमर्थः । यस्मात्स्वयमप्येवमनेनोपायेन प्रतिपद्यते प्रयोगाभ्यासात्तस्मात्स्वप्रतिपत्तावप्युपयुज्यमानस्यास्य प्रयोगभेदस्य स्वार्थानुमाने निर्देशः । यत्पुनः परप्रतिपत्तावेवोपयुज्यते तत्परार्थानुमान एव वक्तव्यमिति ।

ननु च कार्यानुपलब्ध्यादिषु कारणादीनामदृश्यानामेव प्रतिषेधः[6] दृश्यनिषेधे स्वभावानुपलम्भप्रयोगप्रसङ्गात् । तथा च सति न तेषां

---

१ अर्थान्तरविधीत्यादि, लिखितपुस्तकयोः, अर्थान्तरविधीति । २ प्रतिषेध्यादर्थादर्थान्तरस्य, ख० प्रतिषेध्यादर्थान्तरस्य । ३ शब्दश्च, ख० शब्दस्तु । ४ घटितानाम्, ख० परिघटितानाम् । ५ 'इति' पदं ख० पुस्तके न विद्यते । ६ प्रतिषेधः, ख० निषेधः ।

दृश्यानुपलब्धेर्निषेधस्तत्कथमेषां प्रयोगाणां दृश्यानुपलब्धावन्तर्भाव इत्याह—

**सर्वत्र चास्यामभावव्यवहारसाधन्यामनुपलब्धौ येषां स्वभावविरुद्धादीनामुपलब्ध्या कारणादीनामनुपलब्ध्या च प्रतिषेध उक्तस्तेषामुपलब्धिलक्षणप्राप्तानामेवोपलब्धिरनुपलब्धिश्च वेदितव्या ।**

अभावश्च तस्य[1] च व्यवहारोऽभावव्यवहारौ । स्वभावानुपलब्धावभ्भाववव्यवहारः साध्यः । शिष्टेष्वभावः । तयोः साधन्यामनुपलब्धौ । सर्वत्र चेति चशब्दो हिशब्दस्यार्थे । यस्मात्सर्वत्रानुपलब्धौ सत्यां[2] येषां प्रतिषेध उक्तस्तेषामुपलब्धिलक्षणप्राप्तानां दृश्या[3]नामेव स[4] प्रतिषेधस्तस्माद् दृश्यानुपलब्धावन्तर्भावः । कुत एतद्दृश्यानामेवेत्याह स्वभावेत्यादि । अत्रापि चकारो हेत्वर्थः । यस्मात्स्वभावविरुद्ध आदिर्येषां तेषामुपलब्ध्या कारणमादिर्येषां तेषामनुपलब्ध्या प्रतिषेध उक्तस्तस्माद् दृश्यानामेव प्रतिषेध इत्यर्थः । यदि नाम स्वभावविरुद्धाद्युपलब्ध्या कारणाद्यनुपलब्ध्या च प्रतिषेध उक्तस्तथापि कथं दृश्यानामेव प्रतिषेध इत्याह उपलब्धिरित्यादि । अत्रापि चकारो हेत्वर्थः । यस्माद्ये विरोधिनो व्याप्यव्यापकभूताः कार्यकारणभूताश्च ज्ञातास्तेषामवश्यमेवोपलब्धिरुपलब्धिपूर्वा चानुपलब्धिर्वेदितव्या । उपलब्ध्यनुपलब्धी च द्वे येषां स्तस्ते दृश्या एव । तस्मात्स्वभावविरुद्धाद्युपलब्ध्या कारणाद्यनुपलब्ध्या चोपलब्ध्यनुपलब्धिमतां विरुद्धादीनां प्रतिषेधः क्रियमाणो दृश्यानामेव कृतो द्रष्टव्यः । बहुषु चोद्येषु प्रक्रान्तेषु परिहारसमुच्चयार्थश्चकारो हेत्वर्थो भवति । यस्मादिदं चेदं च समाधानमस्ति तस्मात्तत्त्वोद्यमयुक्तमिति चकारार्थः ।

कस्मात्पुनः प्रतिषेध्यानां विरुद्धादीनामुपलब्ध्यनुपलब्धी वेदितव्ये इत्याह—

**अन्येषां विरोधकार्यकारणभावासिद्धेः ।**

उपलब्ध्यनुपलब्धिमद्भ्योऽन्येऽनुपलब्धा एव ये तेषां विरोधश्च

---

१ तस्य च व्यवहारः, ख० तद्व्यवहारश्च । २ पदमिदं ख० पुस्तके नैवोपलभ्यते । ३ दृश्यानामेव, ख० दृश्यमानानामेव । ४ पदमिदं ख० पुस्तके न विद्यते ।

कार्यकारणभावश्च केनचित्सहाभावश्च व्याप्यस्य व्यापकस्याभावेन सिध्यति यस्मात्ततो विरोधिकार्यकारणभावासिद्धेः कारणादुपलब्ध्यनुपलब्धिमन्त एव विरुद्धादयो निषेध्याः। उभयत्रन्तश्च दृश्या एव। तस्माद् दृश्यानामेव प्रतिषेधः। तदयमर्थः। विरोधः[1] कार्यकारणभावश्च व्यापकाभावे व्याप्याभावश्च दृश्यानुपलब्धेरेवेति। एकसंनिधावपराभावप्रतीतौ ज्ञातो विरोधः। कारणाभिमताभावे च कार्याभिमताभावप्रत्ययेऽवसितकार्यकारणभावः। व्यापकाभिमताभावे च व्याप्याभावे निश्चिते निश्चितो व्याप्यव्यापकभावः। तत्र व्याप्यव्यापकभावप्रतीतेर्निमित्तमभावः प्रतिपत्तव्यः। इह गृहीते वृक्षाभावे हि शिंशपात्वाभावप्रतीतौ प्रतीतो[2] व्याप्यव्यापकभावः। अभावप्रतिपत्तिश्च सर्वत्र दृश्यानुपलब्धेरेव। तस्माद्विरोधं कार्यकारणभावं व्याप्यव्यापकभावं च स्मरता विरोधकार्यकारणभावव्याप्यव्यापकभावविषयाभावप्रतिपत्तिनिबन्धनं दृश्यानुपलब्धिः स्मर्तव्या। दृश्यानुपलब्ध्यस्मरणे विरोधादीनामस्मरणम्। तथा च सति न विरुद्धादिविधिप्रतिषेधाभ्यामितराभावप्रतीतिः स्यात्। विरोधादिग्रहणकालभाविन्यां च दृश्यानुपलब्धाववश्यस्मर्तव्यायां तत एवाभावप्रतीतिः। तत्र यद्यपि सम्प्रति[3] नास्ति दृश्यानुपलब्धिर्विरोधादिग्रहणकाले त्वासीत्। या दृश्यानुपलब्धिः सम्प्रति स्मर्यमाणा सैवाभावप्रतिपत्तिनिबन्धनम्। ततः सम्प्रति नास्ति दृश्योपलब्धिरित्यभावसाधनत्वेन दृश्यानुपलब्धिप्रयोगाक्षिप्यन्ते कार्यानुपलब्ध्यादिप्रयोगाः। विरुद्धविधिना कारणादिनिषेधेन च यतो दृश्यानुपलब्धिराक्षिप्ता ततो दृश्यानुपलब्धेरेव कालान्तरवृत्तायाः स्मृतिविषयभूताया अभावप्रतिपत्तिः। अमीषां च प्रयोगाणां दृश्यानुपलब्धावन्तर्भावः। तदनेन सर्वेण दृश्यानुपलब्धावन्तर्भावो दशानामनुपलब्धिप्रयोगाणां पारम्पर्येण दर्शित इति वेदितव्यम्।

उक्ता दृश्यानुपलब्धिरभावेऽभावव्यवहारे साध्ये प्रमाणम्। अदृश्यानुपलब्धिः किं स्वभावा किं व्यापारा चेत्याह—

**विप्रकृष्टविषयानुपलब्धिः प्रत्यक्षानुमानानिवृत्ति-**

---

१ विरोधः, ख० विरोधश्च। २ पदमिदं ख० पुस्तके न विद्यते। ३ सम्प्रति नास्ति, ख० सम्प्रतितनी।

**लक्षणा संशयहेतुः प्रमाणनिवृत्तावप्यर्थाभावासिद्धेरिति ।**

विप्रकृष्टस्त्रिभिर्देशकालस्वभावविप्रकर्षैर्यस्याः विषयः सा विप्रकृष्टविषयेति संशयहेतुः। किं स्वभावा सेत्याह । प्रत्यक्षानुमाननिवृत्तिर्लक्षणं स्वभावो यस्याः सा[1] प्रत्यक्षानुमाननिवृत्तिलक्षणा[2] ज्ञानज्ञेयस्वभावेति यावत् । ननु च प्रमाणात्प्रमेयसत्ताव्यवस्था । ततः प्रमाणाभावात्प्रमेयाभावप्रतिपत्तिर्युक्तेत्याह । प्रमाणनिवृत्तावपीत्यादि । कारणं व्यापकं च निवर्तमानं कार्यं व्याप्यं च निवर्तयेत् । न च प्रमाणं प्रमेयस्य कारणं नापि व्यापकमतः प्रमाणयोर्निवृत्तावप्यर्थस्य प्रमेयस्य निवृत्तिर्न सिध्यति । ततोऽसिद्धेः संशयहेतुरदृश्यानुपलब्धिः । न निश्चयहेतुः । यत्पुनः प्रमाणसत्तया प्रमेयसत्ता सिध्यति तद्युक्तम् । प्रमेयकार्यं हि प्रमाणम् । न च कारणमन्तरेण कार्यमस्ति । न तु[3] कारणान्यवश्यं कार्यवन्ति भवन्ति । तस्मात्प्रमाणात्प्रमेयसत्ता व्यवस्थाप्या । न प्रमाणाभावात्प्रमेयाभावव्यवस्थेति ॥

इति न्यायबिन्दुटीकायां द्वितीयः परिच्छेदः समाप्तः ।



१ पदमिदं ख० पुस्तके नैवोपलभ्यते । २ लक्षणा, क० लक्षणा । न ज्ञान०
३ ननु, ख० न च ।

# अथ तृतीयपरिच्छेदः ।

स्वार्थपरार्थानुमानयोः स्वार्थं व्याख्याय परार्थं व्याख्यातुकाम आह–

## त्रिरूपलिङ्गाख्यानं परार्थानुमानम् ।

त्रिरूपलिङ्गाख्यानमिति । त्रीणि रूपाण्यन्वयव्यतिरेकपक्षधर्मत्वसंज्ञकानि यस्य तत्त्रिरूपम् । त्रिरूपं च तल्लिङ्गं[1] च तस्याख्यानम् । आख्यायते प्रकाश्यतेऽनेनेति त्रिरूपं लिङ्गमित्याख्यानम् । किं पुनस्तद्वचनम् । वचनेन हि त्रिरूपं लिङ्गमाख्यायते । परस्मादिदं परार्थम् ।

ननु च[2] सम्यग्ज्ञानात्मकमनुमानमुक्तम् । तत्किमर्थं सम्प्रति वचनात्मकमनुमानमुच्यत इत्याह ।

## कारणे कार्योपचारात् ।

कारणे कार्योपचारादिति त्रिरूपलिङ्गाभिधानात्त्रिरूपलिङ्गस्मृतिरुत्पद्यते स्मृतेश्चानुमानम् । तस्यानुमानस्य परम्परया त्रिरूपलिङ्गाभिधानं कारणम् । तस्मिन्कारणे वचने कार्यस्यानुमानस्योपचारः समारोपः क्रियते । ततः समारोपात्कारणं वचनमनुमानशब्देनोच्यते । औपचारिकं[3] वचनमनुमानं न मुख्यमित्यर्थः । न च यावत्किंचिदुपचारादनुमानशब्देन वक्तुं शक्यं तावत्सर्वं व्याख्येयम् । किं त्वनुमानं व्याख्यातुकामेनानुमानस्वरूपस्य व्याख्येयत्वान्निमित्तं व्याख्येयम् । निमित्तं च त्रिरूपं लिङ्गम् । तच्च स्वयं वा प्रतीतमनुमानस्य निमित्तं भवति परेण वा प्रतिपादितं भवति[4] । तस्माल्लिङ्गस्य स्वरूपं[5] व्याख्येयं तत्प्रतिपादकश्च शब्दः । तत्र स्वरूपं स्वार्थानुमाने व्याख्यातम् । प्रतिपादकः शब्द इह व्याख्येयः । ततः प्रतिपादकं शब्दमवश्यं वक्तव्यं दर्शयन्ननुमानशब्देनोक्तवानाचार्य इति परमार्थः ।

---

१ तल्लिङ्गं, क० लिङ्गं । २ पाठोऽयं क० पुस्तके नैवोपलभ्यते । ३ औपचारिकम्, क० औपचारकम् । ४ पदमिदं ख पुस्तक एवोपलभ्यते । ५ व्याख्येयम्, ख० च व्याख्येयम् ।

परार्थानुमानस्य प्रकारभेदं दर्शयितुमाह—

## तद्द्विविधं प्रयोगभेदात् ।

तद्द्विविधमिति[1] । तदिति परार्थानुमानम् । द्वौ विधौ प्रकारौ यस्य तद्द्विविधम् । कुतो द्विविधमित्याह । प्रयोगस्य शब्दव्यापारस्य भेदात् । प्रयुक्तिः प्रयोगोऽर्थाभिधानम् । शब्दस्यार्थाभिधानव्यापारभेदाद्द्विविधमनुमानम् ।

तदेवाभिधानव्यापारनिबन्धनं द्वैविध्यं दर्शयितुमाह—

## साधर्म्यवद्वैधर्म्यवच्चेति[2] ।

समानो धर्मो यस्य सोऽयं सधर्मा तस्य भावः साधर्म्यम् । विसदृशो धर्मोऽस्य[3] विधर्मा विधर्मणो भावो वैधर्म्यम् । दृष्टान्तधर्मिणा सह साध्यधर्मिणः सादृश्यं हेतुकृतं साधर्म्यमुच्यते । असादृश्यं च हेतुकृतं वैधर्म्यमुच्यते । तत्र यस्य साधनवाक्यस्य साधर्म्यमभिधेयं[4] तत्साधर्म्यवत् । यथा यत्कृतकं तदनित्यं यथाघटः । यथा च कृतकः शब्द[5] इत्यत्र कृतकत्वकृतं दृष्टान्तसाध्यधर्मिणोः सादृश्यमभिधेयम् । यस्य तु वैधर्म्यमभिधेयं तद्वैधर्म्यवत् । यथा यन्नित्यं तदकृतकं दृष्टं यथाकाशम् । शब्दस्तु कृतक इति । कृतकत्वाकृतकत्वकृतं शब्दाकाशयोः साध्यदृष्टान्तधर्मिणोरसादृश्यमिहाभिधेयम् ।

यद्यनयोः प्रयोगयोरभिधेयं भिन्नं कथं तर्हि त्रिरूपं लिङ्गमभिन्नं प्रकाश्यमित्याह—

## नानयोरर्थतः कश्चिद्भेदोऽन्यत्र प्रयोगभेदात् ।

नानयोरर्थत इति । अर्थः[6] प्रयोजनं प्रकाशयितव्यं वस्तु[7] यदुद्दिश्यानुमाने प्रयुज्येते । ततः प्रयोजनादनयोर्न[8] भेदः कश्चित् । त्रिरूपं हि लिङ्गं प्रकाशयितव्यम् । तदुद्दिश्य द्वे अप्येते प्रयुज्येते । द्वाभ्यामपि त्रिरूपं लिङ्गं

---

१ वाक्यमिदं ख० पुस्तके नोपलभ्यते । २ साधर्म्यवद्वैविध्यवच्चेति । ३ धर्मोऽस्य, क० 'यव्य' ( अशुद्धः ) 'यस्य' इत्यस्य स्थाने, ख० धर्मोस्य । ४ ख० पुस्तके मध्यस्थं पाठं त्यक्त्वा 'साधर्म्यमभिधेयं यस्य तु वैधर्म्यमभिधेयम् ।' इति पाठो विद्यते । ५ क० शब्दः । त्यत्र । ६ ख० 'अर्थः प्रयोजनं यत्प्रयोजनं प्रकाशयितव्यं वस्तु उद्दिश्य' । ७ क० 'प्रकाशयितव्यस्तु ।' ८ अनयोः, ख० नानयोः ।

प्रकाश्यत एव । ततः प्रकाशयितव्यं प्रयोजनमनयोरभिन्नम् । तथा च न ततो भेदः कश्चित् । अभिधेयभेदोऽपि तर्हि न स्यादित्याह । अन्यत्र प्रयोगभेदादिति । प्रयोगोऽभिधानं वाचकत्वम् । वाचकत्वभेदादन्यो भेदः प्रयोजनकृतो नास्तीत्यर्थः । एतदुक्तं भवति । अन्यदभिधेयमन्यत्प्रकाश्यं प्रयोजनम् । तत्राभिधेयापेक्षया वाचकत्वं भिद्यते । प्रकाश्यं त्वभिन्नम् । अन्वये हि कथिते वक्ष्यमाणेन न्यायेन व्यतिरेकगतिर्भवति । व्यतिरेके चान्वयगतिः । ततस्त्रिरूपं लिङ्गं प्रकाश्यमभिन्नम् । न च यत्राभिधेयभेदस्तत्र सामर्थ्यगम्योऽप्यर्थो भिद्यते । यस्मात्पीनो देवदत्तो दिवा न भुङ्क्ते । पीनो देवदत्तो रात्रौ भुङ्क्त इति । अनयोर्वाक्ययोरभिधेयभेदेऽपि गम्यमानमेकमेव । तद्वदिहाभिधेयभेदेऽपि गम्यमानं वस्त्वेकमेव ।

**तत्र साधर्म्यवद्यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः सिद्धः ।**

तत्रेति । तयोः साधर्म्यवैधर्म्यवतोरनुमानयोः साधर्म्यवत्तावदुदाहरणमुदाहर्तुमनुपलब्धिमाह यदित्यादिना । यदुपलब्धिलक्षणप्राप्तं यद्दृश्यं सन्नोपलभ्यत इति । अनेन दृश्यानुपलम्भोऽनूद्यते । सोऽसद्व्यवहारस्य विषयः सिद्धः[2] । तदसदिति व्यवहर्तव्यमित्यर्थः । अनेनासद्व्यवहारयोग्यत्वस्य[3] विधिः कृतः । ततश्चासद्व्यवहारस्य योग्यत्वे दृश्यानुपलम्भो नियतः कथितः । दृश्यमनुपलब्धमसद्व्यवहारयोग्यमेवेत्यर्थः । साधनस्य च साध्येऽर्थे नियतत्वकथनं व्याप्तिकथनम् । यथोक्तम् । व्याप्तिर्व्यापकस्य तत्र भाव एव व्याप्यस्य च[5] तत्रैव भाव इति ।

व्याप्तिसाधनस्य प्रमाणस्य विषयो दृष्टान्तस्तमेव दर्शयितुमाह—

**यथान्यः कश्चिद्दृष्टः शशविषाणादिः ।**

यथान्य इति । साध्यधर्मिणोऽन्यो दृष्टान्त इत्यर्थः । दृष्ट इति प्रमाणेन निश्चितः । शशविषाणं हि न चक्षुषा विषयीकृतम् । अपि तु प्रमा-

---

१ 'उदाहरणमुदाहर्तुं इति पाठो ख० पुस्तक एवोपलभ्यते, अन्यत्र तु 'उदाहरन्' इत्येवास्ति । २ पदमिदं ख० पुस्तके नोपलभ्यते । ३ योग्यत्वस्य, ख० योग्यत्वे । ४ व्याप्तिः, क० व्याप्ति० । ५ च, क० वा ।

णेन दृश्यानुपलम्भेनासद्व्यवहारयोग्यं विज्ञातम् । शशविषाणमादिर्यस्यासद्व्यवहारविषयस्य स तथोक्तः । शशविषाणादौ हि दृश्यानुपलम्भमात्रनिमित्तोऽसद्व्यवहारः प्रमाणेन सिद्धः । तत एव प्रमाणादनेन वाक्येनाभिधीयमाना व्याप्तिर्ज्ञातव्या ।

सम्प्रति व्याप्तिं कथयित्वा दृश्यानुपलम्भस्य पक्षधर्मत्वं दर्शयितुमाह—

**नोपलभ्यते च क्वचित्प्रदेशविशेष उपलब्धि-लक्षणप्राप्तो घट इति ।**

नोपलभ्यते चेति । प्रदेश एकदेशः पृथिव्याः । स एव विशिष्यतेऽन्यस्मादिति विशेषः । एकः प्रदेशविशेष इत्येकस्मिन्प्रदेशे क्वचिदिति । प्रतिपत्तुः प्रत्यक्ष एकोऽपि प्रदेशः स एवाभावव्यवहाराधिकरणं यः प्रतिपत्तुः प्रत्यक्षो नान्यः । उपलब्धिलक्षणप्राप्त इति दृश्यः । यथा चासतोऽपि घटस्य समारोपितमुपलब्धिलक्षणप्राप्तत्वं तथा व्याख्यातम् ।

स्वभावहेतोः साधर्म्यवन्तं प्रयोगं दर्शयितुमाह—

**तथा स्वभावहेतोः प्रयोगः—**

**यत्सत्तत्सर्वमनित्यं यथा घटादिरिति ।**

तथेति । यथानुपलब्धेस्तथा स्वभावहेतोः साधर्म्यवान्प्रयोग इत्यर्थः । यत्सदिति सत्त्वमनूद्य तत्सर्वमनित्यमित्यनित्यत्वं विधीयते । सर्वग्रहणं च नियमार्थम् । सर्वमनित्यं न किंचिन्नानित्यं यत्सत्तदनित्यमेवानित्यत्वादन्यत्र नित्यत्वे सत्वं नास्तीत्येवं सत्त्वमनित्यत्वे साध्ये नियतं ख्यापितं भवति[3] । तथा च सति व्याप्तिप्रदर्शनवाक्यमिदम् । यथा घटादिरिति । व्याप्तिसाधनस्य प्रमाणस्य विषयकथनमेतत् ।

**शुद्धस्य स्वभावहेतोः प्रयोगः ।**

शुद्धस्येति । निर्विशेषणस्य स्वभावस्य प्रयोगः[4] ।

---

१ शशविषाणादिः । २ मात्र०, ख० मात्रः । ३ बौद्धनये यत्सत्तत्सर्वमनित्यं घटादिवत् । न किञ्चिद्वस्तु तेषां मते नित्यमस्ति । ४ प्रयोगः । सविशेषणं, ख० प्रयोगस्य विशेषणम् ।

सविशेषणं दर्शयितुमाह—

### यदुत्पत्तिमत्तदनित्यमिति ।

यदुत्पत्तिमदिति । उत्पत्तिः स्वरूपलाभो यस्या[1]स्ति तदुत्पत्तिमत्[2] । उत्पत्तिमत्त्वमनूद्य तदनित्यमित्यनित्यत्वविधे[3]ः । तथा च सत्युत्पत्तिमत्त्वमनित्यत्वे निय[4]तमाख्यातम् ।

### स्वभावभूतधर्मभेदेन स्वभावस्य प्रयोगः ।

स्वभावभूतः स्वभावात्मको धर्मस्तस्य भेदेन भेदं हेतूकृत्य प्रयोगः । अनुत्पन्नेभ्यो हि व्यावृत्तिमाश्रित्योत्पन्नो भाव उच्यते । सैव व्यावृत्तिः । यदा व्यावृत्त्यन्तरनिरपेक्षा वक्तुमिष्यते तदा व्यतिरेकिणीव निर्दिश्यते । भावस्योत्पत्तिरिति । तया च व्यतिरिक्तयेवोत्पत्त्या विशिष्टं वस्तूत्पत्तिमदुक्तम् । तेन स्वभावभूतेन धर्मेण कल्पितभेदेन विशिष्टः स्वभावः प्रयुक्तो द्रष्टव्यः ।

### यत्कृतकं तदनित्यमित्युपाधिभेदेन ।

यत्कृतकमिति । कृतकत्वमनूद्यानित्यत्वं विधीयत इति । अनित्य[5]त्वे नियतं कृतकत्वमुक्तमतो व्याप्तिरनित्यत्वेन कृतकस्य दर्शिता । उपाधिभेदेन स्वभावस्य प्रयोग इति सम्बन्धः । उपाधिर्विशेषणम् । तस्य भेदेन भिन्नेनोपाधिना विशिष्टः स्वभावः प्रयुक्त इत्यर्थः । इह कदाचिच्छुद्ध एवार्थ उच्यते । कदाचिदव्यतिरिक्तेन विशेषणेन विशिष्टः । कदाचिद्व्यतिरिक्तेन । देवदत्त इति शुद्धः । लम्बकर्ण इत्यभिन्नकर्णद्वयविशिष्टः । चित्रगुरिति व्यतिरिक्तचित्रगवीविशिष्टः । तद्वत्सत्त्वं शुद्धमुत्पत्तिमत्त्वमव्यतिरिक्तविशेषणम् । कृतकत्वं व्यतिरिक्तविशेषणम् ।

ननु च चित्रगुशब्दे व्यतिरिक्तस्य विशेषणस्य वाचकश्चित्रशब्दो गोशब्दश्चास्ति । कृतकशब्दे तु निर्विशेषणवाचिनः शब्दस्य प्रयोगोऽस्तीत्याशङ्क्याह ।

---

१ यस्य, ख० स यस्य । २ उत्पत्तिमत्, क० उत्पत्तिमत्, यदुत्पत्तिमदिति । ३ विधेः, ख० विधिः । ४ नियतं व्याप्तमित्यर्थः । ५ अनित्यत्वे, क० अनियतत्वे ।

## अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक इति[1] ।

अपेक्षितेति । परेषां कारणानां व्यापारः स्वभावस्य निष्पत्तौ निष्पत्त्यर्थमपेक्षितः परव्यापारो येन स तथोक्तः । हीति यस्मादर्थे । यस्मादपेक्षितपरव्यापारः कृतक उच्यते तस्माद्व्यतिरिक्तेन विशेषणेन विशिष्टः स्वभाव उच्यते । यद्यपि व्यतिरिक्तं विशेषणपदं न[2] प्रयुक्तं तथापि कृतकशब्देनैव व्यतिरिक्तं विशेषण[3]मन्तर्भावितमत एव संज्ञाप्रकारोऽयं कृतकशब्दः। यस्मात्संज्ञायामयं कन्प्रत्ययो विहितः । यत्र च विशेषणमन्तर्भाव्यते तत्र विशेषणपदं न प्रयुज्यते । क्वचित्प्रतीयमानं विशेषणं यथा कृत इत्युक्ते हेतुभिरित्येतत्प्रतीयते । तत्र च[4] हेतुशब्दः प्रयुज्यते । कदाचिन्न वा प्रयुज्यते । प्रयुज्यमानस्वशब्दश्च यथा प्रत्यय[5]भेदभेदिशब्दे प्रत्ययभेदः ।

## एवं प्रत्ययभेदभेदित्वादयो द्रष्टव्याः ।

यथा च कृतकशब्दो भिन्नविशेषणस्वभावाभिधाय्येवं प्रत्ययभेदभेदित्वमादिर्येषां प्रयत्नानन्तरीयकत्वादीनां तेऽपि स्वभावहेतोः प्रयोगा भिन्नविशेषणस्वभावाभिधायिनो द्रष्टव्याः । प्रत्ययानां कारणानां भेदो विशेषस्तेन प्रत्ययभेदेन भेत्तुं शीलं यस्य स प्रत्ययभेदभेदी शब्दस्तस्य भावः प्रत्ययभेदभेदित्वम् । ततः प्रत्ययभेदभेदित्वाच्छब्दस्य कृतकत्वं साध्यते । प्रयत्नानन्तरीयकत्वादनित्यत्वं साध्यते[6] । तत्र प्रत्ययभेदशब्दो व्यतिरिक्तविशेषणाभिधायी प्रत्ययभेदभेदिशब्दे प्रयुक्तः । प्रयत्नानन्तरीयकशब्दे च प्रयत्नशब्दः । तदेवं त्रिविधः स्वभावहेतुप्रयोगो[7] दर्शितः । शुद्धोऽव्यतिरिक्तविशेषणो व्यतिरिक्तविशेषणश्च । एवमर्थं[8] चैतदाख्यातम् । वाचकभेदान्मा भूत्कस्यचित्स्वभावहेतावपि प्रयुक्ते व्यामोह इति ।

## सन्नुत्पत्तिमान्कृतको वा शब्द इति पक्षधर्मोपदर्शनम् ।

---

१ कृतकस्य लक्षणमिदम् । २ न, ख० न च । ३ विशेषणं, ख विशेषणपदम् । ४ इदं पदं ख० पुस्तके न विद्यते । ५ प्रत्ययभेदभेदिशब्दे, ख० प्रत्ययभेदशब्दे। ६ पदमिदं ख० पुस्तके नैवोपलभ्यते । ७ क० प्रयोगः, ख० योगः । ८ एवमर्थं, ख० एतदर्थम् । किञ्चिदपि टीकाकारेणास्योपरि न लिखितम् ।

**सर्व एते साधनधर्मा यथास्वं प्रमाणैः सिद्धसाधनधर्ममात्रानुबन्ध एव साध्यधर्मेऽवगन्तव्याः ।**

अथ किमेते स्वभावहेतवः सिद्धसंबन्धे स्वभावे साध्ये प्रयोक्तव्याः, आहोस्विदसिद्धसंबन्ध इत्याशङ्क्य सिद्धसंबन्धे प्रयोक्तव्या इति दर्शयितुमाह । सर्व एत इति । गमकत्वात्[1]साधनानि पराश्रितत्वाच्च धर्माः साधनधर्मा एव साधनधर्ममात्रम् । मात्रशब्देनाधिकस्यापेक्षणीयस्य निरासः । तस्यानुबन्धोऽनुगमनमन्वयः सिद्धः साधनधर्ममात्रानुबन्धो यस्य स तथोक्तः । केन सिद्ध इत्याह । यथा स्वं प्रमाणैरिति[2] । यस्य साध्यधर्मस्य[3] यदात्मीयं प्रमाणं तेनैव प्रमाणेन सिद्ध इत्यर्थः । स्वभावहेतूनां च बहुभेदत्वात् । संबन्धसाधनान्यपि प्रमाणानि बहूनीति प्रमाणैरिति बहुवचननिर्देशः । गमयितव्यत्वात्साध्यः पराश्रितत्वाच्च धर्मः साध्यधर्मस्तदयं परमार्थः । न हेतुः प्रदीपवद्योग्यतया गमकोऽपि तु नान्तरीयकतया विनिश्चितः । साध्याविनाभावित्वनिश्चयनमेव हि[4] हेतोः साध्यप्रतिपादनव्यापारो नान्यः कश्चित् । प्रथमं बाधकेन प्रमाणेन साध्यप्रतिबन्धो निश्चेतव्यो हेतोः पुनरनुमानकालेन साधनं साध्यानन्तरीयकं सामान्येन स्मर्तव्यम् । कृतकत्वं नामानित्यत्वस्वभावमिति सामान्येन स्मृतमर्थं[5] पुनर्विशेषे योजयतीदमपि कृतकत्वं शब्दे वर्तमानमनित्यस्वभावमेवेति । तत्र सामान्यस्मरणं लिङ्गज्ञानम् । विशिष्टस्य तु शब्दगतकृतकस्यानित्यत्वस्वभावस्य स्मरणमनुमानज्ञानम् । तथा च सत्यविनाभावित्वज्ञानमेव परोक्षार्थप्रतिपादकत्वं नाम । तेन निश्चिततन्मात्रानुबन्धिसाध्यधर्मे स्वभावहेतवः प्रयोक्तव्या नान्यत्रेत्युक्तम् ।

यद्येवं सम्बन्धो निश्चेतव्यः । साध्यस्य साधनेन सह साधनधर्ममात्रानुबन्धस्तु साध्यस्य कस्मान्निश्चितो मृग्यत इत्याह । तस्यैवेति[6] । सिद्धसाधनधर्ममात्रानुबन्धस्य ।

---

१ गमकत्वात्, क० गमत्वात् । २ 'इति' इति पाठः ख० पुस्तके नोपलभ्यते । ३ पाठोऽयं ख० पुस्तके नोपलभ्यते । ४ 'हि' इति पाठः ख० पुस्तके नैवोपलभ्यते । ५ स्मृतमर्थम्, ख० स्मृतमर्थाय । ६ नायं 'तस्यैवेति' मूलेऽवलोक्यते । तस्मादस्माकं सम्मतौ किञ्चिच्छब्दं वाक्यं वाऽत्र परित्यक्तम्, मूलपुस्तकस्य लेखकेन प्रमादवशात् ।

## तत्स्वभावत्वात्स्वभावस्य च हेतुत्वात् ।

तत्स्वभावत्वादिति । साधनधर्मस्वभावत्वात् । यो हि साध्यधर्मः साधनधर्ममात्रानुबन्धवान्स एव तस्य साधनधर्मस्य स्वभावो नान्यः । भवत्वीदृश एव स्वभावः । स्वभाव एव तु साध्ये कस्माद्धेतुप्रयोगः । स्वभावस्य हेतुत्वात् । स्वभाव [1]इह हेतुः प्रक्रान्तः । तस्मात्स एव साध्यः कर्तव्यः । यः साधनस्य स्वभावः स्यात्साधनधर्ममात्रानुबन्धश्च[2] स्वभावो नान्यः ।

यदि साध्यधर्मः साधनस्य स्वभावः प्रतिज्ञार्थैकदेशस्तर्हि हेतुः स्यादित्याह ।

## वस्तुतस्तयोस्तादात्म्यात्तन्निष्पत्तावनिष्पन्नस्य तत्स्वभावत्वाभावाद्व्यभिचारसंभवाच्च ।

वस्तुत इति । वस्तुतः परमार्थतः साध्यसाधनयोस्तादात्म्यम् । समारोपितस्तु साध्यसाधनयोर्भेदः[3] । साध्यसाधनभावो हि निश्चयारूढे रूपे । निश्चयारूढं च रूपं समारोपितेन भेदेनेतरव्यावृत्तिकृतेन भिन्नमित्यन्यत्साधनमन्यत्साध्यम् । दूराद्धि शाखादिमानर्थो[4] वृक्ष इति निश्चीयते न शिंशपेति । अथ च स एव वृक्षः । सैव शिंशपा । तस्मादभिन्नमपि वस्तु निश्चयो भिन्नमादर्शयति व्यावृत्तिभेदेन । तस्मान्निश्चयारूढरूपापेक्षयान्यत्साधनमन्यत्साध्यम् , अतो न प्रतिज्ञार्थैकदेशो हेतुर्वास्तवं च तादात्म्यमिति । कस्मात्पुनः साधनधर्ममात्रानुबन्ध्येव[5] साध्यः स्वभावो नान्य इत्याह । तन्निष्पत्ताविति । यो हि यन्नानुबध्नाति स तन्निष्पत्तावनिष्पन्नः[6] । तस्य तन्निष्पत्तावनिष्पन्नस्य साधनस्वभावत्वमयुक्तम् । यतो निष्पत्त्यनिष्पत्ती भावाभावरूपे । भावाभावौ च परस्परपरिहारेण स्थितौ । यदि च पूर्वनिष्पन्नस्यानिष्पन्नस्य चैक्यं भवेत् , एकस्यैवार्थस्य भावाभावौ स्यातां युगपन्न च विरुद्धयोर्भावाभावयोरैक्यं युज्यते । विरुद्धधर्मसंसर्गात्मकत्वा-

---

१ इह, ख० एव । २ अनुबन्धश्च स्वभावः, ख० अनुबन्धवांश्च भावः । ३ साध्यसाधनयोः, ख० साध्यसाधनभेदः । ४ 'अर्थो' इत्यस्य स्थाने मुद्रितपुस्तके 'अथो' इति पाठो विद्यते । यश्चास्माकं सम्मतौ अशुद्ध एव । ५ अनुबन्ध्येव, ख० अनुबन्धे च । ६ क० स तन्निष्पत्तावनिष्पन्नस्य साधन० ।

देकत्वाभावस्य । किं च पश्चादुत्पद्यमानं पूर्वनिष्पन्नाद्भिन्नहेतुकम् । हेतुभेदपूर्वकश्च कार्यभेदः । ततो निष्पन्नानिष्पन्नयोर्विरुद्धधर्मसंसर्गात्मको भेदो भेदहेतुश्च कारणभेद इति कुत एकत्वम् । तस्मात्साधनधर्ममात्रानुबन्ध्येव साध्यः स्वभावो नान्यः । मा भूत्पश्चान्निष्पन्नः पूर्वजस्य स्वभावः । साध्यस्तु कस्मान्न भवतीत्याह । पूर्वजेन पश्चान्निष्पन्नस्य व्यभिचारः परित्यागो यस्तस्य संभवाच्च । न पूर्वनिष्पन्नस्य पश्चानिष्पन्नः साध्यः । तस्मात्साधनधर्ममात्रानुबन्ध्येव स्वभावः[1] । स एव च साध्याः । तथा च सिद्धसाधनधर्ममात्रानुबन्ध एव स्वभावहेतवः[2] प्रयोक्तव्या इति स्थितम् ।

**कार्यहेतोरपि प्रयोगः । यत्र धूमस्तत्राग्निर्यथा महानसादावस्ति चेह धूम इति । इहापि सिद्ध एव । कार्यकारणभावे कारणे साध्ये कार्यहेतुर्वक्तव्यः ।**

कार्यहेतोः प्रयोगः साधर्म्यवानिति प्रकरणादपेक्षणीयम् । यत्र धूम इति । धूममनूद्य तत्राग्निरित्यग्नेर्[3]विधिः । तथा च नियमार्थः पूर्ववदनुगन्तव्यः । तदनेन कार्यकारणभावनिमित्ता व्याप्तिर्दर्शिता । व्याप्तिसाधनप्रमाणविषयं दर्शयितुमाह । यथा महानसादाविति । महानसादौ हि प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावात्माविनाभावो निश्चितः । अस्ति चेहेति । साध्यधर्मिणि पक्षधर्मोपसंहारः । इहापीति । न केवलं स्वभावहेताविहापि कार्यहेतौ[4] सिद्ध एवेति । निश्चिते कार्यकारणत्वे कार्यकारणत्व[5] निश्चयो ह्यवश्यकर्तव्यः । यतो न योग्यतया हेतुर्गमकोऽपि तु नान्तरीयकत्वादित्युक्तम् । साधर्म्यवान्स्वभावकार्यानुपलम्भानां प्रयोगो दर्शितः ।

वैधर्म्यवन्तं दर्शयितुमाह—

**वैधर्म्यवतः प्रयोगो यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एव । यथा नीलादिविशेषः । न चैवमिहोप-**

१ स्वभावः । स एव च साध्यः । तथा च सिद्धसाधन०, ख० यः स्वभावः स एव च साध्यस्वभावः सिद्धसाधन० । २ स्वभावहेतवः, ख० स्वभावे स्वभावहेतवः । ३ अग्नेः, ख० अग्नि० । ४ कार्यहेतौ, ख० कार्यहेतोः । ५ कार्यकारणत्व०, ख० कार्यकारणभाव० ।

**लब्धिलक्षणप्राप्तस्य सत उपलब्धिर्घटस्येत्यनुपलब्धि-प्रयोगः ।**

वैधर्म्यवत इति । यत्सदुपलब्धिलक्षणप्राप्तमिति । यत्साद्दृश्यमित्यस्तित्वानुवादः । तदुपलभ्यते इति उपलम्भविधिः । तदनेन दृश्यस्य सत्त्वं दर्शनविषयत्वेन व्याप्तं कथितमसत्त्वनिवृत्तिश्च । सत्त्वमनुपलम्भनिवृत्तिश्चोपलम्भः । तेन साध्यनिवृत्त्यनुवादेन साधननिवृत्तिर्विहिता । तथा च साध्यनिवृत्तिः साधननिवृत्तौ नियतत्वात्साधननिवृत्त्या व्याप्ता कथिता । यदि च धर्मिणि साध्यधर्मो न भवेद्धेतुरपि[1] । हेत्वभावेन साध्याभावस्य व्याप्तत्वात् । अस्ति च हेतुरतो व्यापकस्य साधनाभावस्याभावाद्व्याप्यस्य साध्याभावस्याभाव इति साध्यनिश्चयो भवति । ततो वैधर्म्यप्रयोगे साधनाभावे साध्याभावो नियतो[2] दर्शनीयः सर्वत्रेति न्यायः ।

स्वभावहेतोर्वैधर्म्यप्रयोगमाह—

**असत्यनित्यत्वे नास्ति सत्त्वमुत्पत्तिमत्त्वं कृतकत्वं वा । असंश्च शब्द उत्पत्तिमान्कृतको वेति स्वभावहेतोः प्रयोगः ।**

असत्यनित्यत्व इति । इहानित्यत्वस्य[3] साध्यस्याभावो हेतोरभावे नियत[4] उच्यते । तेन हेत्वभावेन साध्याभावो व्याप्त उक्तः । त्रिष्वपि स्वभावहेतुषु सन्नुत्पत्तिमान्कृतको वा शब्द इति त्रयाणामपि पक्षधर्मत्वप्रदर्शनम् । इह च साधनाभावस्य व्यापकस्याभाव उक्तः । ततो व्याप्योऽपि साध्याभावो निवृत्त[5] इति साध्यगतिः ।

कार्यहेतोर्वैधर्म्यप्रयोगमाह[6]—

**असत्यग्नौ न भवत्येव धूमोऽत्र चास्तीति कार्य-हेतोः प्रयोगः ।**

असत्यग्नाविति । इहापि वह्न्यभावो धूमाभावेन व्याप्त उक्तः ।

---

१ 'हेतुरपि' इति पाठः क० पुस्तके नोपलभ्यते । २ नियतः ख० नियमः । ३ मुद्रितपुस्तकस्य 'अनित्वस्य' इति पाठोऽशुद्धः प्रतीयते । ४ नियतः, ख० नियमः । ५ निवृत्तः, ख० निवर्त्तते । ६ वैधर्म्यप्रयोगम् , ख० वैधर्म्यवत्प्रयोगम् ।

अस्ति चात्र धूम इति व्यापकस्य धूमाभावस्याभाव उक्तः। ततो व्याप्यस्य वह्न्यभावस्याभावे साध्यगतिः।

ननु च साधर्म्यवति व्यतिरेको नोक्तः। वैधर्म्यवति चान्वयः। तत्कथमेतत्त्रिरूपलिङ्गाख्यानमित्याह—

**साधर्म्येणापि हि प्रयोगेऽर्थाद्वैधर्म्यगतिरिति। असति तस्मिन्साध्येन हेतोन्वयाभावात्।**

साधर्म्येणेति। साधर्म्येणाप्यभिधेयेन युक्ते प्रयोगे क्रियमाणेऽर्थादिति सामर्थ्याद्वैधर्म्यस्य व्यतिरेकस्य गतिर्भवतीति। हीति[2] यस्मात्। तस्मात्त्रिरूपलिङ्गाख्यानमेतत्। यदि नाम व्यतिरेकोऽन्वयवति नोक्तो तथाप्यऽ[3]न्वयवचनसमर्थ्यादेवावसीयते। कथम्? असति तस्मिन्व्यतिरेके[4] बुद्ध्यध्यवसिते साध्येन हेतोरन्वयस्य बुद्ध्यवसितस्याभावात्[5]। साध्ये नियतं साधनमन्वयवाक्यादवस्यता साध्याभावे साधनं नाशङ्कनीयम्। इतरथा साध्यनियतमेव न प्रतीतं स्यात्साध्याभावे च साधनाभावगतिर्व्यतिरेकगतिः। अतः साध्यनियतस्य साधनस्याभिधानसामर्थ्यादन्वयवाक्येऽवसितो व्यतिरेकः।

**तथा वैधर्म्येणाप्यन्वयगतिः। असति तस्मिन् साध्याभावे हेत्वभावस्यासिद्धेः।**

तथेति। यथान्वयवाक्ये तथार्थादेव वैधर्म्येण प्रयोगेऽन्वयस्यानभिधीयमानस्यापि गतिः। कथमसति तस्मिन्नन्वये बुद्धिगृहीते[6] ते साध्याभावे हेत्वभावस्यासिद्धेरनवसायात्। हेत्वभावे साध्याभावं नियतं व्यतिरेकवाक्यादवस्यता हेतुसम्भवे साध्याभावो नाशङ्कनीयः। इतरथा हेत्वभावे नियतः साध्याभावो न स्यात्प्रतीतः। हेतुसत्त्वे च साध्यसत्त्व[7]गतिरन्वयगतिः। अतः साधनाभावनियतस्य साध्याभावस्याभिधानसामर्थ्याद्व्यतिरेकवाक्येऽन्वयगतिः।

---

१ साधर्म्यवति व्यतिरेकः, ख० साधर्म्येऽव्यतिरेकः। २ 'इति' इति पाठः ख० पुस्तके नैवोपलभ्यते। ३ ख० तथाप्यन्वयवचनसामर्थ्यात्। ४ क० व्यतिरेक०। ५ ख० बुद्ध्यध्यवसितस्य। ६ पदमिदं ख० पुस्तके नावलोक्यते। ७ क० साध्यसत्त्व।

यदि नामाकाशादौ साध्याभावे साधनाभावस्तथापि किमिति हेतुसम्भवे साध्यसम्भव इत्याह—

**न हि स्वभावप्रतिबन्धे सत्येकस्य निवृत्तावपरस्य नियमेन निवृत्तिः ।**

नहीति । स्वभावेन प्रतिबन्धो यस्तस्मिन्नसत्येकस्य साध्यस्य निवृत्या नापरस्य साधनस्य नियमेन युक्ता नियमवती निवृत्तिः ।

**स च द्विप्रकारः । सर्वस्य तादात्म्यलक्षणस्तदुत्पत्तिलक्षणश्चेत्युक्तम् ।**

स च स्वभावप्रतिबन्धो द्विप्रकारः सर्वस्य[1] । तादात्म्यं लक्षणं निमित्तं यस्य स तथोक्तः । तदुत्पत्तिलक्षणं निमित्तं यस्य स तथोक्तः । यो यत्र प्रतिबद्धस्तस्य स प्रतिबन्धविषयोऽर्थः स्वभावः कारणं वा स्यात् । अन्यस्मिन्प्रतिबद्धत्वानुपपत्तेः । तस्माद्द्विप्रकारः स इत्युक्तम् । स च साध्येऽर्थे लिङ्गस्येत्यत्रान्तरेऽभिहितः ।

**तेन हि निवृत्तिं कथयता प्रतिबन्धो दर्शनीयः ।**

हिर्यस्मादर्थे । यस्मात्स्वभावप्रतिबन्धे निवर्त्यनिवर्तकभावस्तेन साध्यस्य निवृत्तौ साधनस्य निवृत्तिं कथयता प्रतिबन्धो निवर्त्यनिवर्तकयोर्दर्शनीयः ।

**तस्मान्निवृत्तिवचनमाक्षिप्तप्रतिबन्धोपदर्शनमेव भवति ।**

यदि हि साधनं साध्ये प्रतिबद्धं भवे[2]देवं साध्यनिवृत्तौ तन्नियमेन निवर्तेत । यतश्च तस्य प्रतिबन्धो दर्शनीयस्तस्मात्साध्यनिवृत्तौ यत्साधननिवृत्तिवचनं तेना[3]क्षिप्तं प्रतिबन्धोपदर्शनम् । यच्च तदाक्षिप्तप्रतिबन्धोपदर्शनं तदेवान्वयवचनम् । प्रतिबन्धश्चेदवश्यं दर्शयितव्यः । न वक्तव्यस्तर्ह्यन्वयः ।

**यच्च प्रतिबन्धोपदर्शनं तदेवान्वयवचनमित्येकेनापि वाक्येनान्वयमुखेन व्यतिरेकमुखेन वा प्रयुक्तेन सपक्षा-**

---

१ ख० सर्वस्य प्रतिबद्धस्य । २ 'तत्' इति पदं ख० पुस्तके नोपलभ्यते । ३ ख० तेनाक्षिप्तं प्रतिबन्धोपदर्शनम् तदेवान्वयवचनम् ।

सपक्षयोर्लिङ्गस्य सदसत्त्वख्यापनं कृतं भवतीति नावश्यवाक्यद्वयप्रयोगः ।

यस्माद्दृष्टान्ते प्रमाणेन प्रतिबन्धो दर्श्यमान एवान्वयो नापरः कश्चित्तस्मान्निवर्त्यनिवर्तकप्रतिबन्धो ज्ञातव्यः । तथा चान्वय एव ज्ञातो भवति । इतिशब्दो हेतौ । यस्मादन्वये व्यतिरेकगतिर्व्यतिरेके चान्वयगतिस्तस्मादेकेनापि सपक्षे चासपक्षे च सत्त्वासत्त्वयोः ख्यापनं कृतम् । अन्वयो मुखमुपायोऽभिधेयत्वाद्यस्य तदन्वयमुखं वाक्यम् । एवं व्यतिरेको मुखं यस्येति । इति हेतौ । यस्मादेकेनापि वाक्येन द्वयगतिस्तस्मादेकस्मिन्साधनवाक्ये द्वयोरन्वयव्यतिरेकवाक्ययोरवश्यमेव प्रयोगो न कर्तव्यः । अर्थगत्यर्थो हि शब्दप्रयोगः । अर्थश्चेदवगतः किं शब्दप्रयोगेण । एकमेव त्वन्वयवाक्यं व्यतिरेकवाक्यं वा प्रयोक्तव्यम् ।

अनुपलब्धावपि यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एवेत्युक्तेऽनुपलभ्यमानं तादृशमसदिति प्रतीतेरन्वयसिद्धिः ।

अनुपलब्धावपि व्यतिरेकेणोक्तेनान्वयगतिः । यत्सदुपलब्धिलक्षणप्राप्तमिति । साध्यस्यासद्व्यवहारयोग्यत्वस्य निवृत्तिदृश्यसत्वरूपमाह । तदुपलभ्यत एवेति । अनुपलम्भस्य निवृत्तिमुपलम्भरूपामाह । तदनेन साध्यनिवृत्तिः साधननिवृत्त्या व्याप्ता दर्शिता । यदि च साधनसम्भवेऽपि साध्यनिवृत्तिर्भवेन्न साधनाभावेन व्याप्ता भवेत् । अतो व्याप्तिं प्रतिपद्यमानेन साधनसम्भवः साध्यसम्भवेन व्याप्तः प्रतिपत्तव्यः । अत एवाहानुपलभ्यमानतादृशमिति । दृश्यमसदिति प्रतीतेः संप्रत्ययादन्वयसिद्धिरिति ।

द्वयोरप्यनयाः प्रयोगेऽवश्यं पक्षनिर्देशः ।

---

१ निवर्त्यनिवर्तक०, ख० निवर्त्यनिवर्तकयोः । २ अन्वये, ख० अन्वयेऽपि । ३ क० इतिकरणो हेतौ । ४ 'तु' इति पदं ख० पुस्तके नास्त्येव । ५ उक्तेन, ख० युक्तन । ६ क० व्याप्तिप्रतिपद्यमानेन । ७ पदमिदं क० पुस्तके न विद्यते ।

यतश्च साधनं साध्यधर्मप्रतिबद्धं तादात्म्यतदुत्पत्तिभ्यां प्रतिपत्तव्यं द्वयोरपि प्रयोग[1]योस्तस्मात्पक्षोऽवश्यमेव न निर्देश्यः ।

यत्साधनं साध्यनियतं प्रतीतं तत एव साध्यधर्मिणि दृष्ट्वा साध्यप्रतीतिरतो न किंचित्साध्यनिर्देशेनेत्येवमेवार्थमनुपलब्धिप्रयोगे दर्शयति ।

**यस्मात्साधर्म्यवत्प्रयोगेऽपि यदुपलब्धिलक्षणप्राप्तं सन्नोपभ्यते सोऽसद्व्यवहाराविषयः ।**

साधर्म्यवति प्रयोगेऽपि सामर्थ्यादेव नेह घट इति भवति । किं पुनस्तत्सामर्थ्यमित्याह । यदुपलब्धिलक्षणप्राप्तमिति[2] । अनुपलम्भानुवादः सोऽसद्व्यवहारविषय इत्यसद्व्यवहारयोग्यत्वविधिः । तथा च सति दृश्यानुपलम्भोऽसद्व्यवहारयोग्यत्वेन व्याप्तो दर्शितः ।

**नोपलभ्यते चात्रोपलब्धिलक्षणप्राप्तो घट इत्युक्ते सामर्थ्यादेव नेह घट इति भवति ।**

नोपलभ्यत इत्यादिना साध्यधर्मिणि सत्त्वं लिङ्गस्य दर्शितम् । यदि च साध्यधर्मस्तत्र साध्यधर्मिणि न भवेत्साधनधर्मोऽपि न भवेत । साध्यनियतत्वात्तस्य साधनधर्मस्येति सामर्थ्यम् ।

**तथा वैधर्म्यवत्प्रयोगेऽपि यः सद्व्यवहारविषय उपलब्धिलक्षणप्राप्तः स उपलभ्यत एव न तथात्र तादृशो घट उपलभ्यत इत्युक्ते सामर्थ्यादेव नेह सद्व्यवहारविषय इति भवति ।**

यथा साधर्म्यवत्प्रयोगे तथा वैधर्म्यवत्प्रयोगेऽपि सामर्थ्यादेव नेह सद्व्यवहारविषयोऽस्ति घट इति भवति । सामर्थ्यं दर्शयितुमाह । यः सद्व्यवहारविषय इति विद्यमानः । उपलब्धिलक्षणप्राप्त इति दृश्यः । इत्येषा साध्यनिवृत्तिरुपलभ्यत एवेति साधननिवृत्तिरित्यनेन न साध्य-

१ ख० पुस्तकस्य पाठः 'प्रयोगयोः' इत्यस्मादारभ्य 'घट इति भवति' पर्यन्तं न सम्यक्पठ्यते । २ यदुपलब्धिलक्षणप्राप्तमिति, ख० यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यत इति ।

निवृत्तिः साधननिवृत्त्या व्याप्ता दर्शिता । न तथेति । यथान्यो दृश्य उपलभ्यते न तथात्र प्रदेशे तादृश इति दृश्यो घट उपलभ्यत इत्यनेन साध्यनिवृत्तेर्व्यापिका साधननिवृत्तिरसती साध्यधर्मिणि दर्शिता ।

**कीदृशः पुनः पक्ष इति निर्देश्यः ।**

यदि च न साध्यधर्मः साध्यधर्मिणि भवेत्साधनधर्मोऽपि न भवेदस्ति च साधनधर्म इति सामर्थ्यात्ततः सामर्थ्योन्नास्त्यत्र घट इति प्रतीतेर्न पक्षनिर्देशः । एवं कार्यस्वभावहेत्वोरपि सामर्थ्यात्सम्प्रत्यय इति न पक्षनिर्देशः ।

कीदृशः पुनरर्थः पक्ष इत्यनेन शब्देन निर्देश्यो वक्तव्य इत्याह ।

**स्वरूपेणैव स्वयमिष्टोऽ[1]निराकृत पक्ष इति ।**

स्वरूपेणैवेति । साध्यत्वेनैव स्वयमिति वादिना इष्ट इति नोक्त एवापि त्विष्टोऽपीत्यर्थः । एवंभूतः प्रत्यक्षादिभिरनिराकृतो योऽर्थः[3] स पक्ष इत्युच्यते । अथ यदि न पक्षो निर्देश्यः कथमनिर्देश्यस्य लक्षणमुक्तम् । न साधनवाक्यावयवत्वादस्य लक्षणमुक्तमपि त्वसाध्यं केचित्साध्यं साध्यं चासाध्यं प्रतिपन्नाः । तत्साध्यासाध्यविप्रतिपत्तिनिराकरणार्थं पक्षलक्षणमुक्तम् ।

**स्वरूपेणेति साध्यत्वेनेष्टः । स्वरूपेणैवेति साध्यत्वेनेष्टो न साधनत्वेनापि ।**

स्वरूपेणेष्ट इत्यस्य विवरणम् । साध्यत्वेनेष्ट इति पक्षस्य साध्यत्वान्नापरमस्तिरूपम् । अतः स्वरूपं साध्यत्वमिति । एवशब्दं विवरीतुमाह । स्वरूपेणैवेति ।

ननु चैवशब्दः केवल एव प्रत्यवमर्ष्टव्यस्तत्किमर्थं स्वरूपशब्देन सह प्रत्यवमृष्टः । उच्यते । एवशब्दो निपातो द्योतकः । पदान्तराभिहितस्यार्थस्य विशेषं द्योतयतीति पदान्तरेण विशेष्यवाचिना सह निर्दिष्टः । न

---

१ मुद्रितपुस्तकस्य 'इष्टो किराकृतः' इति पाठोऽशुद्धः प्रतीयते । २ क० साध्यत्वेनैवास्वयमिति । ३ अर्थः, ख० अर्थो यः । ४ असाध्यं केचित्साध्यं साध्यं चासाध्यं प्रतिपन्नाः, ख० असाध्यं किंचित्साध्यं साध्यं चासाध्यं केचित्प्रतिपन्नाः । ५ तत्किमर्थम् , ख० तत्कथम् ।

साधनत्वेनापीति । यत्साधनत्वेन निर्दिष्टं तत्साधनत्वेनेष्टमसिद्धत्वाच्च[1] साध्यत्वेनापीष्टं तस्य निवृत्त्यर्थं एवशब्दः तदुदाहरति[2] ।

**यथा शब्दस्यानित्यत्वे साध्ये चाक्षुषत्वं हेतुः ।**

यथेति । शब्दस्यानित्यत्वे साध्ये चाक्षुषत्वं हेतुः ।

**शब्देऽसिद्धत्वात्साध्यं न पुनस्तदिह साध्यत्वेनैवेष्टं साधनत्वेनाप्यभिधानात् ।**

शब्देऽसिद्धत्वात्साध्यमित्यनेन साध्यत्वेनेष्टिमाह । तदिति । चाक्षुषत्वमिहेति शब्दे न साध्यत्वेनैवेष्टमिति । साध्यत्वेनेष्टिनियमाभावमाह । साधनत्वेनाभिधानादिति । यतः साधनत्वेनाभिहितमतः साधनत्वेनापीष्टम् । न साध्यत्वेनैवेति ।

**स्वयमिति वादिना यस्तदा साधनमाह । एतेन यद्यपि कचिच्छास्त्रे स्थितः साधनमाह । तच्छास्त्रकारेण तस्मिन्धर्मिण्यनेकधर्माभ्युपगमेऽपि यस्तदा तेन वादिना धर्मः स्वयं साधयितुमिष्टः स एव साध्यो नेतर इत्युक्तं भवति ।**

स्वयमित्यनेन स्वयंशब्दं व्याख्येयमुपक्षिप्य तस्यार्थमाह । वादिनेति । स्वयंशब्दो निपातः । आत्मन इति षष्ठ्यन्तस्यात्मनेति च तृतीयान्तस्यार्थे वर्तते । तदिह तृतीयान्तस्यात्मशब्दस्यार्थे वृत्तः स्वयंशब्दः । आत्मशब्दश्च सम्बन्धिशब्दो वादी च प्रत्यासन्नभूतो यस्य वादिन आत्मा तृतीयार्थयुक्तः[3] स एवं[4] तृतीयार्थयुक्तो निर्दिष्टो वादिनेति । ननु स्वयंशब्दस्य वादिनेत्येष पर्यायः । कः पुनरसौ वादीत्याह । यस्तदेति । वादकाले साधनमाह । अनेकवादिसम्भवेऽपि[5] स्वयंशब्दवाच्यस्य वादिनो विशेषणमेतद् यस्यैव वादिन इष्टः साध्य इत्युक्तम् । एतेन च किमुक्तेन । अनेन तदा

१ 'च' इति पदं ख० पुस्तके नैवावलोक्यते । २ उदाहरति, ख० उदाहरति यथेति । ३ तृतीयान्तस्यार्थे वर्तते, ख० तृतीयान्तस्यार्थेन युक्तः । ४ 'एव' इति पदं ख० पुस्तके न विद्यते । ५ 'अपि' इति पदं ख० पुस्तके नास्त्येव ।

वादकाले तेन वादिना स्वयं यो धर्मः साधयितुमिष्टः स एव साध्यो नेतरो धर्म इत्युक्तं भवति । वादिनोऽनिष्टधर्मसाध्यत्वनिवर्तनमस्य वचनस्य फलमिति यावत् । अथ कस्मिन्सत्यन्यधर्मसाध्यत्वसंभवो[2] यन्निवृत्त्यर्थं चेदं[3] वक्तमित्याह । तच्छास्त्रकारेणेति । यच्छास्त्रं तेन वादिनाभ्युपगतं तच्छास्त्रकारेण तस्मिन्साध्यधर्मिण्यनेकस्य धर्मस्याभ्युपगमे सत्यन्यधर्मसाध्यत्वसंभवः । तथा हि शास्त्रं येनाभ्युपगतं तत्सिद्धो धर्मः सर्व एव तेन साध्य इत्यस्ति विप्रतिपत्तिरनेनापास्यते । अनेकधर्माभ्युपगमेऽपि सति स एव साध्यो यो वादिन इष्टो नान्य इति ।

ननु च शास्त्रानपेक्षं वस्तुवलप्रवृत्तं लिङ्गम् । अतोऽनपेक्षणीयत्वान्न शास्त्रे स्थित्वा वादः कर्तव्यः । सत्यम् । आहोपुरुषिकया तु यद्यपि कचिच्छास्त्रे स्थित इति किंचिच्छास्त्रमभ्युपगतः साधनमाह । तथापि य एव तस्येष्टः[4] स एव साध्य इति ज्ञापनायेदमुक्तम्—

**इष्ट इति यत्रार्थे विवादेन साधनमुपन्यस्तं तस्य सिद्धिमिच्छता सोऽनुक्तोऽपि वचनेन साध्यस्तदधिकरणत्वाद्विवादस्य ।**

इष्ट इति । इष्टशब्दमुपक्षिप्य व्याचष्टे । यत्रार्थ आत्मनि विरुद्धो वादः प्रक्रान्तो नास्त्यात्मेत्यात्मप्रतिषेधवाद आत्मसत्तावादविरुद्धो विधिप्रतिषेधयोर्विरोधात् । तेन विवादेन हेतुना साधनमुपन्यस्तम् । तस्यात्मार्थस्य सिद्धिं निश्चयमिच्छता वादिना सोऽर्थः साध्य इत्युक्तं भवतीष्टशब्देन । यत्तदित्युक्तं भवतीतिग्रहणमन्ते तदिहापेक्ष्य वाक्यं परिसमापयितव्यम् । यद्यपि परार्थानुमान उक्त एव साध्यो युक्तोऽनुक्तोऽपि तु वचनेन साध्यः सामर्थ्योक्ततत्रात्तस्य । कुत एतदित्याह । तदित्यादि । तदिति । सोऽधिकरणमाश्रयो यस्य स तदधिकरणो विवादस्तस्य भावस्तत्वं तस्मादित्येतदुक्तं भवति । यस्माद्विवादं निराकर्तुमिच्छता वादिना साधनमुपन्यस्तं तस्माद्यदधिकरणं विवादस्य तदेव साध्यम् । यतो विरुद्धं

---

१ इदं पदं ख० पुस्तके न विद्यते। २ साध्यत्व०, ख० साध्यत्वस्य। ३ चेदं, ख० चैतत्। ४ 'तस्य' इति पदं ख० पुस्तके न विद्यते।

वादमपनेतुं साधनमुपन्यस्तम् । तच्चेन्न साध्यं किमिदानीं जगति नियतं किंचित्साध्यं स्यादिति ।

अनुक्तमपि परार्थानुमाने साध्यमिष्टं तदुदाहरति—

**यथा परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनाद्यङ्गवदिति । अत्रात्मार्था इत्यनुक्तावप्यात्मार्थतानेनोक्तमात्रमेव साध्यमित्युक्तं भवति ।**

परार्था इति । चक्षुरादिर्येषां श्रोत्रादीनां ते[2] चक्षुरादय इति धर्मी । परस्मायिमे परार्था इति साध्यम् पारार्थ्यम् । संघातत्वादिति हेतुः । व्याप्तिविषयप्रदर्शनं शयनासनाद्यङ्गवदिति । शयनमासनं च ते आदी यस्य तच्छयनासनादि पुरुषोपभोगाङ्गं संघातरूपम् । तद्वदत्र । यत्प्रमाणे यदप्यात्मार्थाश्चक्षुरादय इत्यात्मार्थता नोक्ता । अनुक्ता[3]प्यात्मार्थता साध्या । तथा हि । सांख्येनोक्तमस्त्यात्मा । तद्विरुद्धं बौद्धेनोक्तं नास्त्यात्मेति । ततः सांख्येन स्ववादविरुद्धं बौद्धवादं हेतूकृत्य विरुद्धवादनिराकरणाय स्ववादप्रतिष्ठापनाय च साधनमुपन्यस्यम् । अतोऽनुक्ताप्यात्मार्थता साध्या तदधिकरणत्वाद्विवादस्य । शयनासनादिषु[4] हि पुरुषोपभोगाङ्गेष्वात्मार्थत्वेना[5]न्वयो न प्रसिद्धः संघातत्वस्य । परार्थमात्रेण तु सिद्धः । ततः परार्था इत्युक्तम् । चक्षुरादय इत्यत्रादिग्रहणाद्विज्ञानमपि परार्थं साधयितुमिष्टम् । विज्ञानाच्च पर आत्मैव स्यात् । परस्या[6]र्थकारि विज्ञानं सेत्स्यतीति सामर्थ्यादात्मार्थत्वं सिध्यति चक्षुरादीनामिति मत्वा परार्थग्रहणं कृतम् । तेनेष्टसाध्यवचनेन नोक्तमात्रमपि तु प्रतिवादिनो विवादास्पदत्वाद्वादिनः साधयितुमिष्टमुक्तमनुक्तं वा प्रकरणगम्यं साध्यमित्युक्तं भवति—

**अनिराकृत इति । एतल्लक्षणयोगेऽपि यः साधयितुमिष्टोऽप्यर्थः प्रत्यक्षानुमानप्रतीतिस्ववचनैर्निराक्रियते न स पक्ष इति प्रदर्शनार्थम् ।**

---

१ 'तत्' इति पदं ख० पुस्तके न दृश्यते । २ 'ते' इति पदं ख० पुस्तके नोपलभ्यते । ३ 'अनुक्ता' इति पाठः ख० पुस्तके न विद्यते । ४ शयनासनादिषु, क० शयनादिषु । ५ क० आत्मार्थत्वेन प्रसिद्धः । ६ 'परस्य' इति पदं ख० पुस्तके नोपलभ्यते ।

अनिराकृत[1] इति व्याख्येयम् । एतदित्यनन्तरप्रक्रान्तं यत्पक्षलक्षणमुक्तं साध्यत्वेनेष्टेत्यादि । एतल्लक्षणेन योगेऽप्यर्थो न पक्ष इति प्रदर्शनार्थं प्रदर्शनायानिराकृतग्रहणं[2] कृतम् । कीदृशोऽर्थो न पक्षः साधयितुमिष्टोऽपीत्याह । यः साधयितुमिष्टोऽर्थः प्रत्यक्षं चानुमानं च प्रतीतिश्च स्ववचनं चैतैर्निराक्रियते विपरीतः साध्ये न स पक्ष[3] इति—

**तत्र प्रत्यक्षनिराकृतो यथा—अश्रावणः शब्द इति ।**

तत्रेति । तेषु चतुर्षु प्रत्यक्षादिनिराकृतेषु प्रत्यक्षनिराकृतः[4] कीदृशः । यथेति । यथायं प्रत्यक्षनिराकृतस्तथान्येऽपि द्रष्टव्या इति यथाशब्दार्थः । श्रवणेन ग्राह्यः श्रावणः । न श्रावणोऽश्रावणः श्रोत्रेण च ग्राह्य इति प्रतिज्ञार्थः । श्रोत्राग्राह्यत्वं शब्दस्य प्रत्यक्षसिद्धेन श्रोत्रग्राह्यत्वेन बाध्यते—

**अनुमाननिराकृतो यथा—नित्यः शब्द इति ।**

अनुमाननिराकृतः । नित्यः शब्द इति शब्दस्य प्रतिज्ञातं नित्यत्वमनित्यत्वेनानुमानसिद्धेन निराक्रियते—

**प्रतीतिनिराकृतो यथा—अचन्द्रः शशीति ।**

प्रतीत्या निराकृतः । अचन्द्र इति । चन्द्रशब्दवाच्यो न भवति शशीति प्रतिज्ञातार्थः । अयं च प्रतीत्या निराकृतः । प्रतीतोऽर्थ उच्यते । विकल्पविज्ञानविषयः प्रतीतिः । प्रतीतत्वं विकल्पविज्ञानविषयत्वमुच्यते । तेन विकल्पविज्ञानविषयत्वेन[5] प्रतीतिरूपेण शशिनश्चन्द्रशब्दवाच्यत्वं सिद्धमेव । तथा हि । यद्विकल्पज्ञानग्राह्यं[6] तच्छब्दाकारसंसर्गयोग्यम् । तत्सांकेतिकेन शब्देन वक्तुं शक्यम् । अतः प्रतीतिरूपेण विकल्पविज्ञानविषयत्वेन सिद्धं चन्द्रशब्दवाच्यत्वमचन्द्रत्वस्य बाधकं द्रष्टव्यम् । स्वभावहेतुश्च प्रतीतिः । यस्माद्विकल्पविषयत्वमात्रानुबन्धिनी सांकेतिकशब्दवाच्यता ततः स्वभावहेतुसिद्धं चन्द्रशब्दवाच्यत्वमवाच्यत्वस्य बाधकं द्रष्टव्यम्—

**स्ववचननिराकृतो यथा-नानुमानं प्रमाणम् ।**

---

१ अनिराकृतः, क० अनिकृतः । २ प्रदर्शनाय, ख० प्रतिपादनाय । ३ न स पक्षः, ख० स न पक्षः । ४ 'प्रत्यक्ष' इति पाठः ख० पुस्तके नोपलभ्यते । ५ विकल्पविज्ञानविषयत्वेन, क० विकल्पविज्ञानेन । ६ विकल्पज्ञानग्राह्यं, क० ज्ञानग्राह्यं ।

स्ववचनं प्रतिज्ञार्थस्यात्मीयो वाचकः शब्दस्तेन निराकृतः। प्रतिज्ञार्थो न साध्यः। यथा नानुमानं प्रमाणम्। अत्रानुमानस्य प्रामाण्यनिषेधः प्रतिज्ञार्थः। स नानुमानं प्रमाणमित्यनेन स्ववाचकेन वाक्येन बाध्यते। वाक्यं ह्येतत्प्रयुज्यमानं वक्तुः शाब्दस्य प्रत्ययस्य सदर्थत्वमिष्टं सूचयति। तथाहि। मद्वाक्याद्योऽर्थसंप्रत्ययस्तवोत्पद्यते सोऽसत्यार्थ इति दर्शयन्वाक्यमेव नोच्चारयेद्वक्ता। वचनार्थश्चेदसत्यः परेण ज्ञातव्यो वचनमपार्थकम्। योऽपि हि सर्वं मिथ्या ब्रवीमीति[1] वक्ति सोऽप्यस्य वाक्यस्य सत्यार्थत्वमादर्शयन्नेव वाक्यमुच्चारयति। तद्येतद्वाक्यं[2] सत्यार्थमादर्शितम्। एवं वाक्यान्तराण्यात्मीयान्यसत्यार्थानि[3] दर्शितानि भवन्ति—

**एतदेव तु यद्यसत्यार्थमन्यान्यसत्यार्थानि न दर्शितानि भवन्ति।**

ततश्च न किंचिदुच्चारणस्य फलमिति नोच्चारयेत्। तस्माद्वाक्यप्रभवं वाक्यार्थालम्बनं विज्ञानं सत्यार्थं दर्शयन्नेव वक्ता वाक्यमुच्चारयति। तथा[4] च सति बाह्यवस्तुनान्तरीयकं शब्दं दर्शयता शब्दजं विज्ञानं सत्यार्थं दर्शयितव्यम्। ततो बाह्यार्थकार्याच्छब्दादुत्पन्नं विज्ञानं सत्यार्थमादर्शयता[5] कार्यलिङ्गजमनुमानं प्रमाणं शाब्दं दर्शितं भवति। तस्मान्नानुमानं प्रमाणमिति ब्रुवता शाब्दस्य[6] प्रत्ययस्यासन्ग्राह्य उक्तोऽसदर्थत्वमेव ह्यप्रामाण्यमुच्यते। नान्यत्। शब्दोच्चारणसामर्थ्याच्चार्थाविनाभावी स्वशब्दो दर्शितः। तथा च सन्नर्थो[7] दर्शितः। ततः कल्पितादर्थकार्याच्छब्दाच्छाब्दप्रत्ययार्थस्यानुमितं[8] सत्त्वं प्रतिज्ञायमानमसत्त्वं प्रतिबध्नाति। तदेवं स्ववचनानुमितेन सत्त्वेनासत्त्वं वाच्यमानं स्ववचनेन बाधितमुक्तमित्ययमत्रार्थः।

अन्ये त्वाहुः। अभिप्रायकार्याच्छब्दाज्जातं ज्ञानमभिप्रायालम्बनं सदर्थमिच्छतः शब्दप्रयोगः। तेनाप्रामाण्यं प्रतिज्ञातं बाध्यत इति। तदयुक्तम्। यत इह प्रतीतेः स्वभावहेतुत्वं स्ववचनस्य च कार्यहेतुत्वं कल्पि-

---

१ ब्रवीमीति वक्ति, ख० ब्रवीति वक्ति। २ 'तद्येतद्' इति पाठः क० पुस्तक एव विद्यते। अन्यत्र सर्वत्र तु 'यद्येतद्' इति पाठः एव। ३ क० असत्यानि। ४ तथा, क० यथा। ५ आदर्शयता, क० आदर्शयिता। ६ शाब्दस्य, ख० शब्दस्य। ७ ख० असन्तर्थो ग्राह्य, क० असन् ग्राह्य। ८ शाब्दप्रत्ययार्थस्य, क० शब्दप्रत्ययार्थस्य।

ष्टमिष्टम् । न वास्तवम् । अभिप्रायकार्यत्वं च वास्तवमेव शब्दस्य । ततस्तदिह न गृह्यते । किं च यथानुमानमनिच्छन्नप्यन्वयव्यभिचारित्वं धूमस्य न प्रत्येति । तथा शब्दस्याप्यभिप्रायाव्यभिचारित्वं न प्रत्येष्यति । बाह्यवस्तुप्रत्यायनाय च शब्दः प्रयुज्यते । तन्न शब्दस्याभिप्रायाविनाभवित्वाभ्युपगमपूर्वकः शब्दप्रयोगः । अपि[1] च न स्वाभिप्रायनिवेदनाय शब्दं[2] उच्चार्यन्ते । अपि तु बाह्यवस्तुसत्त्वप्रतिपादनाय । तस्माद्बाह्यवस्तुविनाभावित्वाभ्युपगमपूर्वकः शब्दप्रयोगः । ततः पूर्वकमेव व्याख्यानमनवद्यम्—

इति चत्वारः पक्षाभासा निराकृता भवन्ति ।

एवं च[3] सत्यनिराकृतग्रहणेनानन्तरोक्ताश्चत्वारः पक्षवदाभासन्त इति पक्षाभासा निरस्ता भवन्ति ।

संप्रति पक्षलक्षणपदानि येषां व्यवच्छेदकानि तेषां व्यवच्छेदेन यादृशः पक्षार्थो लभ्यते तं दर्शयितुं व्यवच्छेद्यान्संक्षिप्य दर्शयति ।

सिद्धस्यासिद्धस्यापि साधनत्वेनाभिमतस्य स्वयं वादिना तदा साधयितुमनिष्टस्योक्तमात्रस्य निराकृतस्य च विपर्ययेण साध्यस्तेनैव स्वरूपेणाभिमतो वादिन इष्टोऽनिराकृतः पक्ष इति पक्षलक्षणमनवद्यं[4] दर्शितं भवति ।

एवमित्यनन्तरोक्तक्रमेण[5] सिद्धस्य विपर्ययेण विपरीतत्वेन हेतुना साध्यो द्रष्टव्यः । यस्मादर्थात्सिद्धोऽर्थो विपरीतः स साध्य इत्यर्थः । सिद्धश्च विपरीतोऽसिद्धस्य । तस्मादसिद्धः साध्यः । असिद्धोऽपि न सर्वोऽपि तु साधनत्वेनोक्तस्यासिद्धस्यापि विपर्ययेण स्वयं वादिना साधयितुमनिष्टस्यासिद्धस्य विपर्ययेण । तथोक्तमात्रस्यासिद्धस्यापि विपर्ययेण

---

१ ख० पुस्तके 'अपि च' इत्यस्मादारभ्य 'शब्दप्रयोगः' इत्येतावत्पर्यन्तं द्वे पंक्ती परित्यक्ते । संभवतः लेखकस्य दृष्टिः प्रथमं 'शब्दप्रयोगः' इति पदं दृष्ट्वा भ्रमेण द्वितीयस्य 'शब्दप्रयोगः' इत्यस्योपरि पतिता । २ शब्दः, क० टब्दः । ३ 'च' इति पाठः ख० पुस्तक एव विद्यते । ४ मुद्रितपुस्तकस्य 'अवद्यं' इति पाठोऽस्माकं सम्मतावशुद्धोऽस्ति । ५ अनन्तरोक्तक्रमेण, ख० अनन्तरोक्तेन क्रमेण ।

तथा निराकृतस्यासिद्धस्यापि विपर्ययेण साध्यः । यश्चायं पञ्चभिर्व्यवच्छेदै रहितोऽर्थोऽसिद्धोऽसाधनम्[1] । वादिनः स्वयं साधयितुमिष्ट उक्तोऽनुक्तो वा[2] प्रमाणैरनिराकृतः[3] साध्यः । स एवासौ स्वरूपेणैव स्वयमिष्टोऽनिराकृत एतैः पदैरुक्त इत्यर्थः । यश्चायं साध्यः स पक्ष उच्यते । इतिशब्द एवमर्थे । एवं पक्षलक्षणमनवद्यमिति । अविद्यमानमवद्यं दोषो यस्य तदनवद्यम् । दर्शितं कथितम् ।

त्रिरूपलिङ्गाख्यानं परिसमापय्य प्रसङ्गागतं च पक्षलक्षणमभिधाय हेत्वाभासान्वक्तुकामस्तेषां प्रस्तावं रचयति । त्रिरूपेत्यादिना ।

**त्रिरूपलिङ्गाख्यानं परार्थानुमानमित्युक्तम् ।**

एतदु[4]क्तं भवति । त्रिरूपलिङ्गाख्यानं वक्तुकामेन स्फुटं तद्वक्तव्यम् । एवं च तत्स्फुटमुक्तं भवति । यदि तच्च तत्प्रतिरूपकं[5] बोध्यते । हेयज्ञाने हि तद्विविक्तं[6]मुपादेयं सुज्ञातं भवतीति । त्रिरूपलिङ्गाख्यानं परार्थानुमानमिति प्रागुक्तम् ।

**तत्र त्रयाणां रूपाणामेकस्यापि रूपस्यानुक्तौ साधनाभासः उक्तावप्यसिद्धौ संदेहे वा । प्रतिपाद्यप्रतिपादकयोरेकस्य रूपस्य धर्मिसंबन्धस्यासिद्धौ संदेहे चासिद्धो हेत्वाभासः ।**

तत्रेति । तस्मिन्सति त्रिरूपलिङ्गाख्याने परार्थानुमाने सतीत्यर्थः । त्रयाणां रूपाणां मध्य एकस्याप्यनुक्तौ । अपिशब्दाद्द्वयोरपि । साधनस्याभासः सदृशं साधनस्य न साधनमित्यर्थः । त्रयाणां रूपाणां न्यूनता नाम साधनदोषः । न केवलमनुक्तावुक्तावप्यसिद्धौ संदेहे वा कस्येत्याह । प्रतिपाद्यस्य प्रतिवादिनः प्रतिपादकस्य च वादिनो हेत्वाभासः । अथ क[7]स्य रूपस्यासिद्धौ संदेहे वा[8] किंसंज्ञको हेत्वाभास इत्याह । एकस्य रूपस्येति । धर्मिणा सह सम्बन्धः धर्मिसंबन्धः । धर्मिणि सत्त्वं हेतोः ।

---

१ असाधनं, क० असाधनं २ । २ वा, क० वा ४ । ३ निराकृतः, निराकृतः ५ । ४ एतद्, तद् । ५ प्रतिरूपकं, ख० प्रतिरूपम् । ६ क० विवक्तम् । ७ कस्य, ख० कस्यैकस्य । ८ वा किं०, क० वाक्यं ।

तस्यासिद्धौ संदेहे वाऽसिद्धसंज्ञको हेत्वाभासः। असिद्धत्वादेव च धर्मिण्य-प्रतिपत्तिहेतुर्न साध्यस्य न विरुद्धस्य न संशयस्य हेतुरपि त्वप्रतिपत्ति-हेतुर्न कस्यचिदतः प्रतिपत्तिरिति कृत्वा। अयं चार्थोऽसिद्धसंज्ञाकरणादेव प्रतिपत्तव्यः।

उदाहरणमाह—

**यथा—अनित्यः शब्द इति साध्ये चाक्षुषत्वमुभयासिद्धम्।**

यथेत्यादि। अनित्यः[1] शब्द इत्यनित्यत्वविशिष्टे शब्दे साध्ये चाक्षुषत्वं चक्षुर्ग्राह्यत्वं शब्दे द्वयोरपि[2] वादिप्रतिवादिनोरसिद्धम्।

**चेतनास्तरव इति साध्ये सर्वत्वगपहरणे मरणं प्रतिवाद्यसिद्धं विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात्तस्य च तरुष्वसंभवात्।**

चेतनास्तरव इति तरूणां चैतन्ये साध्ये सर्वा त्वक्सर्वत्वक्। तस्या अपहरणे सति मरणं दिगम्बरैरुपन्यस्तम्। प्रतिवादिनो बौद्धस्यासिद्धम्। कस्मादसिद्धमित्याह। विज्ञानं चेन्द्रियं चायुश्च[3]। रूपादिविज्ञानोत्पत्त्या यदनुमितं कायान्तर्भूतं[4] चक्षुर्गोलकादिस्थितरूपं तदिन्द्रियम्। आयुरिति लोके प्राणा उच्यन्ते[5]। न चागमसिद्धमिह युज्यते वक्तुम्। अतः प्रमाणस्वभावमायुरिह[6]। तेषां निरोधो निवृत्तिः। स लक्षणं तत्त्वं यस्य तत्तथोक्तम्। तथाभूतस्य मरणस्यानेन बौद्धेन प्रतिज्ञातत्वात्। यदि नामैवं तथापि कथमसिद्धमित्याह। तस्य च विज्ञानादिनिरोधात्मकस्य तरुष्वसंभवात्[7]। सत्तापूर्वको निरोधः। ततश्च यो विज्ञाननिरोधं तरुष्विच्छेत्स कथं विज्ञानं नेच्छेत्। तस्माद्विज्ञानानिष्टेर्निरोधोऽपि नेष्टस्तरुषु। ननु च शोषोऽपि मरणमुच्यते। स च तरुषु सिद्धः। सत्यम्। केवलं विज्ञानसत्तया[8] व्याप्तं यन्मरणं तदिह हेतुर्विज्ञाननिरोधश्च। तत्स-

---

१ अनित्यः, ख० नित्यः। २ ख० द्वयोर्द्वयोरपि। ३ चायुश्च, ख० चायुश्च तत्रविज्ञान (अशुद्धः) चक्षुरादि जयित (अशुद्धः)। ४ ख० कार्यान्तभूतं। ५ ख० उच्यते। ६ आयुरिह। तेषां, ख० आयुः। इह तेषां। ७ असंभवात्, ख० अभावात्। ८ 'विज्ञानसत्तया'। क० मुद्रितपुस्तके च 'विज्ञानसत्ताया'।

त्तया[1] व्याप्तो न शोषमात्रम्। ततो[2] यन्मरणहेतुस्तत्तरुष्वसिद्धम्। यत्तु सिद्धं शोषात्मकं तदहेतुः। दिगम्बरस्तु साध्येन व्याप्तमव्याप्तं वा मरणमविविच्य मरणमात्रं हेतुमाह। तदस्य वादिनो हेतुभूतं[3] मरणं न ज्ञातम्। अज्ञानात्सिद्धं शोषरूपम्। शोषरूपस्य मरणस्य तरुषु दर्शनात्। प्रतिवादिनस्तु ज्ञातमतोऽसिद्धम्। यदा तु वादिनोऽपि ज्ञातं तदा वादिनोप्यसिद्धं स्यादिति न्यायः।

**अचेतनाः सुखादय इति साध्य उत्पत्तिमत्त्वमनित्यं वा सांख्यस्य स्वयं वादिनोऽसिद्धम्।**

अचेतनाः सुखादय इति। सुखमादिर्येषां दुःखादीनां ते सुखादयः। तेषामचैतन्ये साध्य उत्पत्तिमत्त्वमनित्यत्वं वा लिङ्गमुपन्यस्तम्। य उत्पत्तिमन्तोऽनित्या वा ते न चेतना यथा रूपादयः। तथा चोत्पत्तिमन्तोऽनित्या वा सुखादयस्तस्मादचेतनाः। चैतन्यं तु पुरुषस्य स्वं रूपम्। अत्र चोत्पत्तिमत्त्वमनित्यत्वं वा पर्यायेण हेतुर्न युगपत्। तच्च द्वयमपि सांख्यस्य वादिनो न सिद्धम्। परार्थो हि[4] हेतूपन्यासः। तेन यः परस्य सिद्धः स हेतुर्वक्तव्यः। परस्य चासत उत्पाद उत्पत्तिमत्त्वम्। सतश्च निरन्वयो विनाशोऽनित्यत्वं सिद्धम्। तादृशं च द्वयमपि सांख्यस्यासिद्धम्। इहाप्यनित्यत्वोत्पत्तिमत्त्वसाधनाज्ञानाद्वादिनोऽसिद्धम्। यदि त्वनित्यत्वोत्पत्तिमत्त्वयोः प्रमाणं[5] वादिनो ज्ञातं स्यात्[6]। वादिनोऽपि सिद्धं स्यात्। ततः प्रमाणापरिज्ञानादिदं वादिनोऽसिद्धम्।

संदिग्धासिद्धं दर्शयितुमाह—

**तथा स्वयं तदाश्रयणस्य वा संदेहेऽसिद्धः।**

स्वयमिति। हेतोरात्मनः संदेहेऽसिद्धः। तदाश्रयणस्य चेति। तस्य हेतोराश्रयणमाश्रीयतेऽस्मिन्हेतुरित्याश्रयणं हेतोर्व्यतिरिक्त आश्रयभूतः साध्यधर्मी कथ्यते। तत्र हि हेतुर्वर्तमानो गमकत्वेनाश्रीयते। तस्याश्रयणस्य संदेहे संदिग्धः।

---

१ सत्तया, क० मुद्रितपुस्तके च 'सत्ताया'। २ ततः क० तत्र। ३ हेतुभूतं, क० हेतुज्ञात्ततं (अशुद्धः)। ४ परार्थो हि, ख० परार्थादि। ५ प्रमाणं, ख० प्रमाण्यं। ६ स्यात्, ख० स्यात्तदा।

स्वात्मना संदिह्यमानमुदाहर्तुमाह—

**यथा वाष्पादिभावेन संदिह्यमानो भूतसंघातोऽग्निसिद्धावुपदिश्यमानः संदिग्धासिद्धः ।**

यथेति । बाष्प आदिर्यस्य स बाष्पादिस्तद्भावेन बाष्पादित्वेन संदिह्यमानो भूतसंघात इति । भूतानां पृथिव्यादीनां संघातः समूहः । अग्निसिद्धावग्निसिद्ध्यर्थमुपादीयमानोऽसिद्धः । एतदुक्तं भवति । यदा धूमोऽपि बाष्पादित्वेन संदिग्धो भवति । तदासिद्धो गमक[2]त्वानिश्चयाद्भूमतया निश्चितो वह्निजन्यत्वाद्गमकः । यदा तु संदिग्धस्तदा न गमक इति । असिद्धताख्यो दोषः ।

आश्रयणासिद्धमुदाहरति—

**यथेह निकुञ्जे मयूरः केकायितादिति ।**

यथेति । इह निकुञ्ज इति धर्मी । पर्वतोपरिभागेन तिर्यङ्निर्गतेन प्रच्छादितो भूभागो निकुञ्जः । मयूर इति साध्यम् । केकायितादिति हेतुः । केकायितं मयूरध्वनिः ।

कथमाश्रयणासिद्ध इत्याह—

**तदापातदेशविभ्रमे ।**

तदापात[3] इति । तस्य केकायितस्यापात आगमनं तस्य देशः स उच्यते । यस्माद्देशादागच्छति केकायितम् । तस्य विभ्रमे व्यामोहे सत्ययमाश्रयणासिद्धः । निरन्तरेषु बहुषु निकुञ्जेषु सत्सु यदा केकायितापात[4]विभ्रमः किमस्मान्निकुञ्जात्केकायितमागतमाहोस्विदस्मा[5]दिति तदाश्रयणासिद्ध इति ।

धर्मिणो सिद्धावप्यसिद्धत्वमुदाहरति—

**धर्म्यसिद्धावप्यसिद्धो यथा सर्वगत आत्मेति साध्ये सर्वत्रोपलभमानगुणत्वम् ।**

यथेति । सर्वस्मिन् गतः स्थितः सर्वगतो व्यापीति यावत् । व्यापित्व

---

१ क० वाष्पादिह्यमाना । २ क० गक । ३ क० तदघात । ४ केकायितमपातविभ्रमः, ख० केकायितापातनिकुंजे विभ्रमः । ५ अस्मात् , ख० अन्यस्मात् ।

आत्मनः साध्ये सर्वत्रोपलभ्यमानगुणत्वं लिङ्गम् । सर्वत्र देश उपलभ्यमानाः सुखदुःखेच्छाद्वेषादयो गुणा यस्यात्मनस्तस्य भावस्तत्त्वम् । न गुणा गुणिनमन्तरेण वर्तन्ते । गुणानां गुणिनि समवायात् । निष्क्रियश्चात्मा । ततश्च यदि व्यापी न भवेत्कथं दक्षिणापथ उपलब्धाः सुखादयो मध्यदेश उपलभ्येरन् । तस्मात्सर्वगत आत्मा । तदिह बौद्धस्यात्मैव न सिद्धः किमुत सर्वत्रोपलभ्यमानगुणत्वं सिध्येत् । तस्येत्यसिद्धो हेत्वाभासः । पूर्वमाश्रयणसंदेहेन धर्मिणि संदेह उक्तः । संप्रति त्वसिद्धो धर्म्युक्त इत्यनयोर्विशेषस्तदेवमेकस्य रूपस्य धर्मिबद्धस्यासिद्धावसिद्धो हेत्वाभासः ।

**तथैकस्य रूपस्यासपक्षेऽसत्त्वस्यासिद्धावनैकान्तिको हेत्वाभासः ।**

तथा परस्यैकस्य रूपस्यासपक्षेऽसत्त्वाख्यस्यासिद्धावनैकान्तिको हेत्वाभासः । एकोऽन्त एकान्तो निश्चयः । स प्रयोजनमस्येत्यैकान्तिकः । नैकान्तिकोऽनैकान्तिकः । यस्मान्न साध्यस्य न विपर्ययस्य निश्चयोऽपि तु तद्विपरीतः संशयः । साध्येतरयोः संशयहेतुरनैकान्तिक उक्तः ।

तमुदाहरति—

**यथा शब्दस्यानित्यत्वादिके धर्मे साध्ये प्रमेयत्वादिको धर्मः सपक्षविपक्षयोः । सर्वत्रैकदेशे वा वर्तमानस्तथास्यैव रूपस्य संदेहेऽप्यनैकान्तिक एव ।**

यथेत्यादिना । अनित्यत्वमादिर्यस्य सोऽनित्यत्वादिको धर्मः । आदिशब्दादप्रयत्नानन्तरीयकत्वं प्रयत्नानन्तरीयकत्वं नित्यत्वं च परिगृह्यते प्रमेयत्वमादिर्यस्य स प्रमेयत्वादिकः । आदिशब्दादनित्यत्वं पुनरनित्यत्वममूर्तत्वं च गृह्यते । शब्दस्य धर्मिणोऽनित्यत्वादिके धर्मे साध्ये प्रमेयत्वादिको धर्मोऽनैकान्तिकः । चतुर्णामपि विपक्षेऽसत्त्वमसिद्धम् । तथाहि । अनित्यः शब्दः प्रमेयत्वादाकाशवद्घटवदिति प्रमेयत्वं सपक्षविपक्षव्यापि ।

---

१ मुद्रितपुस्तकस्य 'सत्त्वस्य' इति पाठोऽशुद्धः प्रतीयते । २ पदमिदं ख० पुस्तके नोपलभ्यते । ३ गृह्यते, ख० गृह्यन्ते ।

अप्रयत्नानन्तरीयकः शब्दोऽनित्यत्वाद्विद्युदाकाशवद्[1] घटवच्चेत्यनित्यत्वं सपक्षैकदेशवृत्ति विद्युदादावस्ति नाकाशादौ[2]। विपक्षव्यापि प्रयत्नानन्तरीयके सर्वत्र भावात्। अनित्यत्वात्प्रयत्नानन्तरीयकः शब्दो घटवद्विद्युदाकाशवच्चेत्यनित्यत्वं विपक्षैकदेशशब्दवृत्ति विद्युदादावस्ति नाकाशादौ। सपक्षव्यापि सर्वत्र प्रयत्नानन्तरीयके भावात्। नित्यः शब्दोऽमूर्तत्वादाकाशपरमाणुवत्कर्मघटवच्चेत्यमूर्तत्वमुभयैकदेशवृत्ति। उभयोरेकदेश आकाशे कर्मणि च वर्तते। परमाणौ तु सपक्षकदेशे घटादौ च विपक्षैकदेशे न वर्तते। मूर्तत्वाद्घटपरमाणुप्रभृतीनाम्। नित्यास्तु परमाणवो वैशेषिकैरभ्युपगम्यन्ते। ततः सपक्षान्तर्गताः। अस्य चतुर्विधस्य पक्षधर्मस्यासत्त्वमसिद्धं विपक्षे। ततोऽनैकान्तिकता। यथा चास्य रूपस्यासिद्धावनैकान्तिकस्तथास्यैव विपक्षेऽसत्त्वाख्यस्य रूपस्य संदेहेऽनैकान्तिकः।

तमुदाहरति—

**यथाऽसर्वज्ञः कश्चिद्विवक्षितः पुरुषो रागादिमान्वेति साध्ये वक्तृत्वादिको धर्मः संदिग्धविपक्षव्यावृत्तिकः। सर्वत्रैकदेशे वा सर्वज्ञो वक्ता नोपलभ्यते इति।**

यथेति। असर्वज्ञ इति। असर्वज्ञत्वं साध्यम्। कश्चिद्विवक्षित इति वक्तुरभिप्रेतः पुरुषो धर्मी। राग आदिर्यस्य द्वेषादेः स रागादिः स यस्यास्ति स रागादिमानिति द्वितीयं साध्यम्। वाग्रहणं रागादिमत्त्वस्य पृथक्साध्यत्वख्यापनार्थम्। ततोऽसर्वज्ञत्वे रागादिमत्त्वे वा साध्ये प्रकृते वक्तृत्वं वचनशक्तिस्तदादिर्यस्योन्मेषनिमेषादेः स वक्तृत्वादिको धर्मोऽनैकान्तिकः। संदिग्धा[3] विपक्षाद्व्यावृत्तिर्यस्य स तथोक्तः। असर्वज्ञत्वे साध्ये सर्वज्ञत्वं विपक्षः। तत्र वचनादेः सत्त्वमसत्त्वं वा संदिग्धम्। अतो न ज्ञायते वक्ता सर्वज्ञ उतासर्वज्ञ इत्यनैकान्तिकं वक्तृत्वम्।

ननु च[4] सर्वज्ञो वक्ता नोपलभ्यते तत्कथं वचनं सर्वज्ञे संदिग्धम्। अत एव सर्वज्ञो वक्ता नोपलभ्यत इति।

---

१ क० विद्युदाकाशद्घटवत्। २ लेखकस्य प्रमादेन ख० पुस्तके 'नाकाशादौ' इयमध्यस्थः पाठः परित्यक्तः। ३ संदिग्धा, ख० संदिग्ध०। ४ पदमिदं ख० पुस्तके नोपलभ्यते।

एवं प्रकारस्यानुपलम्भस्याद्दश्यात्मविषयत्वेन संदेहे हेतुत्वात् ।

एवंप्रकारस्यैवंजातीयस्यानुपलम्भस्य संदेहहेतुत्वात्। कुत इत्याह। अदृश्यात्मा विषयो यस्य तस्य भावोऽदृश्यात्मविषयत्वं तेन संदेहहेतुत्वम् ।

असर्वज्ञविपर्ययाद्वक्तृत्वादेर्व्यावृत्तिः संदिग्धा । वक्तृत्वसर्वज्ञत्वयोर्विरोधाभावाच्च ।

यतोऽदृश्यविषयोऽनुपलम्भः संशयहेतुर्न निश्चयहेतुस्ततोऽसर्वज्ञविपर्यात्सर्वज्ञाद्वक्तृत्वादेर्व्यावृत्तिः संदिग्धा । नानुपलम्भात् । सर्वज्ञे वक्तृत्वमसद्भमोऽपि तु सर्वज्ञत्वेन सह वक्तृत्वस्य विरोधात । एतन्न सर्वज्ञत्ववक्तृत्वयोर्विरोधो नास्ति । विरोधाभावाच्च कारणाद्व्यतिरेको न सिध्यतीति सम्बन्धः ।

व्याप्तिमन्तं व्यतिरेकं दर्शयति ।

यः सर्वज्ञः स वक्ता न भवतीत्यदर्शनेऽपि व्यतिरेको न सिध्यति । सन्देहात् ।

यः सर्वज्ञ इति । साध्याभावरूपं सर्वज्ञत्वमनूद्य न स वक्ता भवतीति साधनस्य वक्तृत्वस्याभावो विधीयते । तेन साध्याभावः साधनाभावे नियतत्वात्साधनाभावेन व्याप्त उक्त इति व्याप्तिमानीदृशो व्यतिरेको विरोधे सति वक्तृत्वसर्वज्ञत्वयोः सिध्येत् । न चास्ति विरोधः । तस्मान्न सिध्यति । कुत इत्याह । संदेहात् । यतो विरोधाभावस्तस्मात्संदेहः । संदेहाद्व्यतिरेकासिद्धिः ।

कथं विरोधाभावः ।

द्विविधो हि पदार्थानां विरोधः ।

१ एवंजातीयस्य, ख० एवंजातीयकस्य । २ संशयहेतुः, ख० संदेहेतुः (अशुद्धः) । ३ सर्वज्ञे, ख० संदिग्धे । ४ मुद्रितपुस्तकस्य सम्पादकेन 'संदेहात्' इति हेतुवाक्यं द्विविधमित्यग्रिमवाक्ये निबद्धम् । ५ न स वक्ता, ख० स वक्ता न । ६ साधनाभावेन, ख० साधर्म्यभावेन । ७ सिध्यति, ख० सिध्यतीति ।

हीति[1]। यस्माद् द्विविध एव विरोधो नान्यः। तस्मान्न वक्तृत्वसर्वज्ञत्वयोर्विरोधः।

कः पुनरसौ द्विविधो विरोध इत्याह।

## अविकलकारणस्य भवतोऽन्यभावः।

अविकलकारणस्येति। अविकलानि समग्राणि कारणानि यस्य स तथोक्तः। यस्य कारणवैकल्यादभावो न तस्य केनचिदपि विरोधगतिः। तदर्थमविकलकारणग्रहणम्।

ननु च यस्यापि कारणसाकल्यं तस्यापि निवृत्तिरशक्या केनचिदपि कर्तुं तत्कुतो विरोधगतिः। एवं तर्हि।

## अभावाद्विरोधगतिः।

अविकलकारणस्यापि यत्कृतात्कारणवैकल्यादभावः। तेन विरोधगतिः। तथा च सति यो यस्य विरुद्धः स तस्य किंचित्कर एव। तथा हि। शीतस्पर्शस्य जनको भूत्वा शीतस्पर्शान्तरजननशक्तिं प्रतिबध्नञ्शीतस्पर्शस्य निवर्तको विरुद्धः। तस्माद्धेतुवैकल्यकारी विरुद्धो जनक एव। निवर्त्यस्य सहानवस्थानविरोधश्चायम्। ततो विरुद्धयोरेकस्मिन्नपि क्षणे सहावस्थानं परिहर्तव्यम्। दूरस्थयोर्विरोधाभावाच्च निकटस्थयोरेव निवर्त्यनिवर्तकभावः। तस्माद्यो यस्य निवर्तकः स तं यदि परं तृतीये क्षणे निवर्तयति। प्रथमे क्षणे सन्निपतन्नसमर्थावस्थानयोग्यो भवति। द्वितीये विरुद्धमसमर्थं करोति। तृतीये त्वसमर्थे निवृत्ते तद्देशमाक्रामति। तत्रालोको गतिधर्मा क्रमेण जलतरङ्गन्यायेन देशमाक्रामन्[2]यदान्धकारे निरन्तरमालोकक्षणं जनयति, तदालोकसमीपवर्तिनमन्धकारमसमर्थं जनयति। ततोऽसामर्थ्यं तस्य यस्य समीपवर्त्यालोकः। असामर्थ्ये[3] निवृत्ते तादृशो जायत आलोक इत्येवं क्रमेणालोकेनान्धकारोऽपनेयः। तथोष्णस्पर्शेन शीतस्पर्शो निवर्तनीयः। यदा त्वालोकस्तत्रैवान्धकारे देशे जन्यते तदा यतः क्षणादन्धकारदेशस्यालोकस्य जनकक्षण उत्पद्यते तत एवान्धकारोऽन्धकारान्तरजननासमर्थ[4] उत्पन्नः।

---

१ हीति यस्मात्, ख० हिर्यस्मात्। २ आक्रामन्, ख० आक्रामयन्। ३ असामर्थ्ये, क० असमर्थ्ये, ख० असमर्थे। ४ अन्धकारान्तरजननासमर्थः, क० अन्धकारान्तरासमर्थः, ख० अन्धकारान्तराजनना समर्थः।

